निषेधनिरूपणेऽपि विरुद्धधर्माश्रयत्वेन प्राकृतधर्मनिषेधेनोपपत्तौ लक्षणापादकस्यारोपस्य दुष्टत्वात् । किं च प्रकृतौ कर्तृत्वस्य निषिध्यमानत्वेन जीवस्य स्वातन्त्र्याभावेन च कर्तृत्वाभावाद् ब्रह्मण्यारोपासम्भवस्तस्मात्सकलजगत्कारणं ब्रह्म अत्र 'जन्माद्यस्य यतः' 'शास्त्रयोनित्वादि'ति योगविभागः सर्वमते तन्न । अग्रिमसूत्रेषु साध्यहेतुनिर्देशपूर्वकमेव दर्शनेनात्रापि तथैव युक्तत्वात् । ये तु जन्माद्यधिकरणं शास्त्रयोनित्वाधिकरणभिन्नमङ्गीकुर्वन्ति तत्र हि प्रथमसूत्रे हेतोरभावाद्द्वितीयेच' साध्याभावान्न वाक्यार्थसिद्धिरित्यादिदोष इति श्रीपुरुषोत्तमचरणैर्भाष्यप्रकाशे बहुशः खण्डितो योगविभागः । द्वितीयेऽधिकरणे तत्तु समन्वयादिति सूत्रे ब्रह्म समवायि? उत नेति संशये समवायित्वे विकारित्वापत्तिरिति न तादृशमिति पूर्वपक्षे तत्समवायिकारणं ब्रह्म कुतः समन्वयात् सम्यगनुवृतत्वात् घटे मृद इवास्तिभातिप्रियाणां जगत्यनुवृतत्वादित्यर्थः । तादात्म्यसंम्बन्धेन यदाश्रयं कार्यं भवति तत्समवायिकारणम् । अस्यैवावस्थाविशेष उपादानं तल्लक्षणं च स्वसमानसत्ताकं कार्याकारेण यदाविर्भवति तदुपादानम् । तृतीयेऽधिकरणे चिद्रूपेण कारणत्वमानन्दमयाधिकरणआनन्दरूपेण कारणत्वं व्यासपादैर्विचारितमित्यर्थः । 'यतो वेत्यादि' 'भृगुर्वै वारुणिर्वरुणं पितरमुपससार–अधीहि भगवो ब्रह्मेति तदे होवाच यतो वाइमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति. तद्ब्रह्मेति तद्विजिज्ञासस्व' इति स्पष्टमेव कारणत्वं ब्रह्मणि प्रतीयतइत्यर्थः ॥ ७ ॥

एवं ब्रह्मणःकारणतामुपपाद्य ब्रह्मणो लक्षणमाहुः साकारमित्यादि-

साकारं सर्वशक्त्येकं सर्वज्ञं सर्वकर्तृ च ।
सच्चिदानन्दरूपं हि ब्रह्म तस्मादिदं जगत् ॥ ८ ॥

आनन्दाकारमित्यर्थः 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एक' इति तैत्तरीये श्वेताश्वेतरे चास्ति श्रुतिः । अत्र मुखादीनां सर्वत्र विद्यमानत्वमुक्तं सर्वेन्द्रियोपलक्षणं तेन साकारस्यैव व्यापकत्वम् । बाहुभ्यामिति द्विवचनेन ब्रह्मणो द्विभुजत्वं श्रुतिसिद्धं चतुर्भुजत्वं तु स्मृतिप्रसिद्धम् । देव इत्यनेन लीलास्थपुरुषोत्तमस्यात्र ग्रहणं दिवुधातोः क्रीडार्थकत्वात् । छान्दोग्ये 'सर्वकामः सर्वगन्धः सर्वरस' इत्युक्तं

'रसो वै स' इति तैत्तिरीये 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपा'दिति पुरुषसूक्तेऽपि साकारत्वमग्रे 'ततो विराडजायत' इति कथनान्नायं विराट् पुरुषः 'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुख' मित्यादि गीतायां 'आनन्दमात्रकरपादमुखोदरादिरिति नारदपञ्चरात्रे 'अथवा परमात्मानं परमानन्दविग्रह'मिति याज्ञवल्क्यस्मृतौ। नन्व 'पाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'अस्थूलमनण्वि' त्यादिषु श्रुतिषु निषेधात्कथं साकारत्वमितिचेन्न अपाणिपादत्वमुक्त्वा यज्जवनगृहीतृत्वमुक्तं तेन (तद्वाक्यं) लौकिकपाणिपादादिनिषेधपरम्। अनण्वित्यादिवाक्येऽपि—अग्रे 'एतस्य प्रशासने गार्गि! द्यावाभूमी विधृते तिष्ठत' इत्युक्तं"यथा सैन्धवो घनो वाह्योन्तरः कृत्स्नो रसघन एवं वाऽरेऽयमात्मा कृत्स्नः प्रज्ञानघन एवे'ति श्रुतौ घनपदेन साकारत्वलाभादर्थस्तु यथा सैन्धवः परिदृश्यमानः रसघन एवं ब्रह्मापि यावत्तावत्प्रज्ञानघनमेवेति। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतेः। 'यः सर्वज्ञः सर्वविदि'ति श्रुतेः। 'सर्वकर्त्ता सर्वभोक्ता चे'ति 'सत्यं ज्ञानमानन्दं ब्रह्मे'ति श्रुतेरानन्दमात्रमेव। एवं चकारादिदं परिदृश्यमानं सर्वं ब्रह्मैव ॥ ८ ॥

सच्चिदानन्दरूपब्रह्मणः सकाशाज्जगदुत्पत्तौ जडजीवान्तर्यामिणां सदादिभ्य उद्गम इत्याहुर्जडेत्यादि—

जडजीवान्तःस्थितानां यथाक्रमश उद्गमः।
अग्नेर्यथा विस्फुलिङ्गास्तथा जीवोद्गमः स्फुटः ॥ ९ ॥

उद्गमो निःसरणं जीवोद्गमे श्रुत्युक्तं दृष्टान्तमाहुरग्नेरिति 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गा व्युच्चरन्ति। एवमेव तस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे जीवाः कपूयचरणा रमणीयचरणा' इति मुण्डकश्रुतौ। एतेन जीवस्योत्पत्तावनित्यत्वापत्तिरिति निरस्तं जीवस्य निःसरणमेवोच्यते न तूत्पत्तिः ॥ ९ ॥

ननु जीवस्य विस्फुलिङ्गवन्निःसरणेऽणुत्वे सर्वशरीरगतचैतन्यानुपलम्भस्तत्राहुः विसर्पीत्यादि—

विसर्पिगुणचैतन्योऽणुर्जीवोंशो हरेः स्मृतः।
जडे चिदानन्दयोस्तु चित्यानन्दस्य सर्वशः ॥ १० ॥

तिरोधानं हरीच्छातो निबन्धादिषु वर्णितम् ॥
आविर्भावे तु सर्वं हि ब्रह्मैवेति न संशयः ॥ ११ ॥

विसर्पि प्रसरणशीलं चैतन्यं गुणो यस्य सः यथा मणेः प्रभा तथा च व्याससूत्रं 'गुणाद्वाऽऽलोकवत्' अर्थस्तु जीवस्य चैतन्यं गुणस्तस्मात्सर्वशरीरव्यापी तत्र दृष्टान्तः आलोकवत् सूर्यमण्यादिप्रभा यथा बहुदेशं व्याप्नोति तद्वदित्यर्थः । अग्रे 'व्यतिरेको गन्धवत्' अर्थस्तु व्यतिरेकोऽधिकदेशवर्तिचैतन्यं गुणो गन्धवत्—यथा चम्पकादेर्गन्धश्चम्पकाधिकदेशस्थलउपलभ्यते तद्वदित्यर्थः । न च चम्पकात्तदवयवानां निःसरणे गन्धोपलब्धिरिति वाच्यम् । निःसरणे न्यूनत्वापत्तेः।भोग्यादृष्टत्वेन तदवयवपूरणकल्पनायां गौरवात्। किञ्चोग्रगन्धादेः स्पर्शे मुहुर्मुहुः क्षालनेन सुगन्धानपगमादनेकचर्मपुटवेष्टितस्य मृगमदस्य सुगन्धोपलब्धेश्चातोऽवयवकल्पना निरस्तेति दिक् । किञ्च तृतीयोऽपि दृष्टान्तः 'अविरोधश्चन्दनवत्'—अर्थस्तु यथाचन्दनमेकदेशस्थितं सर्वशरीरे सुखं शैत्यं च जनयति तद्वदणुत्वेऽपि सर्वशरीरचैतन्योपलब्धिरित्यर्थः । 'एषोऽणुरात्मा चेतसा वेदितव्य' इति श्रुतेः 'नित्यः सर्वगतस्थाणु' रिति स्मृतेश्च सर्वगतेन ब्रह्मणा सह तिष्ठतीति सर्वगतस्थः 'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इति श्रुतेः स चासावणुश्चेति तदर्थः । यदि यथाश्रुतार्थः स्यात्तर्हि स्थाण्वचलपदयोः पर्यायत्वापत्तौ पुनरुक्तिः स्यात्। 'अंशो नानाव्यपदेशादि' ति व्याससूत्रादंशः—अर्थस्तु जीवो ब्रह्मणोंऽशः कुतः नानाव्यपदेशात् क्वचिद्ब्रह्मत्वेन क्वचिदज्ञत्वेन क्वचिदीशितव्यत्वेन निरूपणादेकस्यैव विरुद्धधर्माश्रयत्वं ब्रह्मातिरिक्तस्य न सम्भवत्यतो जीवो ब्रह्मांश इति हरेरिति 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति गीतावाक्यतः । ननु सर्वस्य ब्रह्मात्मकत्वेन कथं त्रैविध्यमत आहुर्जडेत्यादिना । आनन्दतिरोभावेन भेद इति भावः ॥ तिरोधानमिति—'एकोऽहं बहु स्यामि' ति श्रुतिसिद्धेच्छात इत्यर्थः । ननु तर्हिभेदापत्तिरतआहुः आविर्भावेत्वित्यादि आनन्दाविर्भावे जीवे चिदानन्दयोर्जडे ॥ १० ॥ ११ ॥

ननु जीवादिभावे किं प्रयोजनमत आहूरमणार्थमिति

रमणार्थमिदं सर्वं ब्रह्मैव स्वेच्छयाऽभवत् ।
यथा सर्पः स्वेच्छया हि कुण्डलाकारतां गतः ॥ १२ ॥

न विकारि तथा ब्रह्मव्यासैः सूत्रे निरूपितम् ।
सुवर्णस्याविकारित्वं कामधेनोर्मणेरपि ॥ १३ ॥

"एकाकी न रमते स द्वितीयमैच्छत्" "तदात्मानꣳ स्वयमकुरुते" त्यादिश्रुतेः। ननु तर्हि विकारित्वापत्तिस्तत्राह यथेति। सूत्रइति—'उभयव्यपदेशात्त्वहिकुण्डलव'दितिसूत्रइत्यर्थः। अर्थस्तु—उभयोर्विरुद्धधर्मयोर्व्यपदेशस्तस्मान्निर्गुणत्वेनानन्तगुणत्वेन परिणामित्वेनाविकारित्वेन विरुद्धधर्मरूपेण व्यपदेशाच्छ्रुतौ कथनात्सर्वाकारं ब्रह्मेत्यर्थः। तथा च श्रुतिषु "साक्षी चेता केवलो निर्गुणश्चे"त्युक्त्वा "एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति"ततो यदुत्तरं "तदरूपमनामय "मित्यग्रे सर्वाननशिरोग्रीवं" इतिश्वेताश्वतरे तैत्तरीये "यदेकमव्यक्तमनन्तरूपं" "विश्वतश्चक्षुरुत विश्वतोमुख" इत्यादि चोक्तं तथानन्दवल्यां "तदात्मानं स्वयमकुरुत" "यद्वैतत्सुकृत" मिति "अविनाशी वाअरेऽयमात्मे" त्यादिकं चान्यत्रोक्तमेवं विरुद्धधर्माश्रयत्वेन बहुशो व्यपदेशादित्यर्थः। तर्हि कथमेकमनेकधेति तत्राहु "रहिकुण्डलव"द्यथा सर्पः सरलः कुण्डलाकारश्च भवति तद्वद्ब्रह्म सर्वाकारं भवति नहि सर्पस्य कुण्डलाकारे कोऽपि विकारः। भाष्ये तु सर्वाणितैजसान्यविकृतानीत्युक्तम्। एवं च सुवर्णस्यानेकाकारत्वेऽपि न सुवर्णस्यान्यथाभावः। सुबोधिन्यां तु कामधेनुकल्पद्रुमचिन्तामणेश्च जायमानाः पदार्था दृश्यन्ते तेन न कामधेन्वादीनां विकृतत्वमित्युक्तमिति दिक्॥ १२॥ १३॥

ननु सर्वस्य घटादेरुत्पत्तिनाशदर्शनेनानित्यत्वात्कथं भगवद्रूपत्वं कार्यस्येत्याशङ्कामपनयन्ति—आविर्भावेत्यादि—

आविर्भावतिरोभावौ पदार्थानां यतस्ततः ।
नानित्यता तु विज्ञेया शास्त्रविद्भिर्विचक्षणैः ॥ १४ ॥
तिरोभावे तु कार्यं हि वर्त्तते कारणात्मना ।
आविर्भावे तु कार्यं हि यथा मृदि घटादयः ॥ १५ ॥

घटपटादिसर्वाकारस्वरूपेण या भगवत आविर्भावेच्छा तयाऽऽविर्भवति तथाच श्रीमदाचार्यचरणैर्निबन्धे 'मृदादि भगवद्रूपं घटाद्याकारसंयुतम्। मूलेच्छातस्तथा तस्मिन् प्रादुर्भावो हरेस्तदा' इति

व्याख्यातं च तैरेव मृदि घटादयो यावन्तो भविष्यन्ति ते सर्वे कारणत्वेन वर्त्तन्ते इत्यङ्गीकर्त्तव्यं अन्यथा ततः प्रादुर्भावो नोपपद्येत ततः सामर्थ्यं भगवत्त्वेन सङ्गच्छते अतो मृदादि भगवद्रूपे घटादिकार्यं च तत्रैव तिष्ठति मूलेच्छातः पुरुषोत्तमेच्छात इति 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत् ' इति विष्णुपुराणे प्रथमेंऽशे । वस्तुतो नित्यं किन्त्वाविर्भावतिरोभावजन्मनाशविकल्पवत्– आविर्भावश्च तिरोभावश्च– आविर्भावतिरोभावौ तावेव जन्मनाशविकल्पौ तद्वदित्यर्थः । 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण' इति वाक्यं श्रीमदाचार्यचरणैरुक्तम् । भगवच्छक्तित्वादेव वीर्यादिपरिणामानां देहादिभावः । "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतेरनन्तशक्तित्वाद्भगवतः । आविः प्रकटं भावयति कारणान्तःस्थं कार्यं बहिः प्रकटीकरोति या शक्तिर्निमित्तगतोपादानगता च सा–आविर्भावशक्तिः या कार्यं कारणे तिरोभावयति सा शक्तिस्तिरो भावशब्दवाच्येत्यभिप्रेत्याहुस्तिरोभावेत्वित्यादि। अत्रैवं ज्ञेयं तन्तुतुरीवेमादिभ्यः पटोत्पत्त्या मृद्दण्डचक्रादिभ्यश्च घटोत्पत्त्य तस्य तस्य पटघटजनने शक्तिरिति निश्चीयते सा च नस्वभावो नापि स्वरूपं तथा सति तस्य सार्वदिकत्वात्–शीर्णेभ्योऽपि तन्त्वादिभ्यः पटाद्युत्पत्तिः स्यात् भर्जिताद्बीजादप्यङ्कुरोत्पत्तिः स्यात् प्रतिबन्धकमणिसमवधानेऽपि वह्निस्तृणादिकं दहेत स्वभावस्यानपायात् स्वरूपस्य च सत्त्वात् । अतः शीर्णतन्त्वादिषु कालेन भर्जितेषु भर्जनेन च नाश्या-- अग्नेर्मणिसन्निधेन प्रतिबन्ध्या च काचित् स्वभावात् स्वरूपाच्चातिरिक्तैव शक्तिरङ्गीकार्या । ननु तन्त्वादीनामविशीर्णत्वेन बीजानामप्यभर्जितत्वेन रूपेणैव कार्यजननदर्शनात् तेनैव रूपेण कारणतेति नातिरिक्तशक्तिकल्पनं गुरुभूतं वह्निस्थलेऽपि प्रतिबन्धकमण्यभावेन निर्वाहाच्चेति चेन्नादावदग्धवेत्रबीजेभ्यः कदलीकाण्डजननस्य भामत्यां प्रदर्शितत्वात् काचिच्छक्तिर्भर्जनेन नाश्यते–अपरा आधीयतइति मन्तव्यं वह्निस्थले प्रतिबन्धसमवधानउत्तेजकेन मणिना दाहदर्शनात् । उत्तेजकाभावविशिष्टमण्यभावविशिष्टवह्नेरेव कारणत्वेऽति गौरवम् । तथा हि–मण्यभावत्वेन प्रवेशो नानाकार्यकारणभावकल्पनाऽत्यन्तमेव गुर्वी । मन्त्रौषधादिनाऽपि दाहाभावात् । एवमुत्तेजकानामपि नानात्वात्तत्तत्स्वरूपेण प्रवेशे ततोऽप्यत्यन्तगौरवम् । यत्किञ्चित्त्वेन प्रवेशो यावत्तदभाव-

विशिष्टमण्यभावविशिष्टस्याग्नेर्दाहं प्रत्यकारणत्वासतो दाहाभावापत्तिः। यावत्त्वेन प्रवेशे यत्किञ्चिद्वैशिष्ट्ये दाहाभावापत्तिः। यथाकथञ्चित्त्वेन प्रवेशेऽपि तादृशकार्यकारणभावज्ञानस्योत्तेजकतदभावतद्वैशिष्ट्यज्ञानाधीनतया तादृशगुरुशरीरकारणतास्वरूपकारणस्यैव दौर्घल्यमिति तदपेक्षया शक्तिकल्पनमेव ज्याय इति सर्वनिर्णयावरणभङ्गे श्रीपुरुषोत्तमचरणैर्विस्तरशो निरूपितमिति ततोऽवधेयम्। तस्मादाविर्भावतिरोभावयोः शक्तित्वं शक्तिमति भगवद्रूपे घटे तिष्ठति। अतएव घटो भवतीति कर्त्तरि प्रयोगः स्वमते सर्वेषां भगवद्रूपत्वात्। इच्छासहकारेण नित्ययोरप्याविर्भावतिरोभावयोर्न सदैवोद्गमः विशेषस्तु विद्वन्मण्डने श्रीमत्प्रभुचरणैरुक्तः॥ १४॥ १५॥

आविर्भावतिरोभावलक्षणमाहुः—यदेत्यादि–

यदाऽनुभवयोग्यत्वं वर्त्तमानस्य वस्तुनः।
आविर्भावः स विज्ञेयस्तिरोभावस्ततोऽन्यथा॥ १६॥

योग्यतानिवेशेन दरीविवराङ्कुरेषु नाव्याप्तिः शशशृङ्गादौ च नातिव्याप्तिः। वृद्धिपरिणामादिष्वपि वृद्धौ पूर्वरूपतिरोभावेन द्वितीयस्याविर्भावः परिणामे रूपान्तरस्य। क्षये तु तिरोभावः। अन्यथेति तदयोग्यत्वमित्यर्थः॥ १६॥

नन्वनयोरङ्गीकारे प्रागभावादिसत्त्वे चातिगौरवमत आहुः प्रागभावादय इति

प्रागभावादयो नाङ्गीकार्या आभ्यां यतोऽखिलम्।
तद्विस्तरभिया नात्र लिख्यतेऽन्यत्र दृश्यताम्॥ १७॥

प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावः एते नाङ्गीकार्या यत आभ्यामाविर्भावतिरोभावाभ्याम्। कया रीत्या सिद्धिस्तत्राहुस्तदित्यादि। अन्यत्र प्रागभावखण्डने सर्वनिर्णयनिबन्धावरणभङ्गादिषु तत्र प्रागभावः कारणावस्थातो नातिरिच्यते तस्य भिन्नकारणत्वकल्पनायां प्रमाणाभावात् अग्रिमजननज्ञानेनैव तस्यानुभव इति श्रीमदाचार्यचरणैरुक्तं निबन्धे। न चेह कपाले घटो नास्तीति प्रतीतिस्तत्र मानं तस्या घटत्वावच्छिन्नप्रतियोगिताकाभावविषयतया सामान्यत्वेन प्रागभावाख्यविशेषानवगाहित्वात्। एवं ध्वंसोऽपि दण्डादिस्वरूपमेव तिरोभावशक्त्यतिरिक्तस्य ध्वंसस्य निरूपयितुमशक्यत्वात् तेन रूपान्तरं पश्यन् पूर्वस्य तिरोभावमेव मन्यते ध्वस्त इति श्रीमदार्यचरणैस्तत्र निरू-

पितमातिरः-अप्रकटं भावयतीति तिरोभावनं वा तिरोभावः उभयथाऽपि निमित्तोपादानान्यतरस्वरूपातिरिक्तो ध्वंसो न निरूपयितुं शक्यः, तदतिरिक्तस्यादर्शनात् । तथा च कार्यप्रतिकूला कारणावस्थैव ध्वंस इति तदर्थः । प्रागभावादिप्रयोगाश्च घटस्यानन्यथासिद्धपश्चाद्भाविंत्वं दण्डस्य तादृशपूर्वभावित्वं चापेक्ष्य यथा घटदण्डयोः कार्यकारणप्रयोगः, तथा घटादेरग्रिमजननमाकारान्तरं चापेक्ष्य कारण एव प्रागभावध्वंसपदप्रयोगः । घटः पटो नेत्यन्योन्याभावप्रतीतावपि मूलेच्छया घटे पटादीनां तिरोभावः, एवं पटे घटादीनाम् । यद्यपि सर्वेषां पदार्थानां ब्रह्मरूपत्वेन सर्वधर्मत्वं तथाऽपि मत्स्याद्यवतारवज्जलाहरणकार्यार्थमेव घटब्रह्मण आविर्भावः, एवमावरणकार्यार्थं पटरूपब्रह्मणः । एतेनान्योन्याभावानङ्गीकारे घटेन पटकार्यं स्यादित्यादि निरस्तं भगवतस्तथेच्छातः सर्वमनवद्यम् । एवमत्यन्ताभावोऽपि तिरोभावेनैव गतार्थ इति दिक् । अभावस्याधिकरणरूपत्वमित्यन्यत्र विस्तरः ॥ १७ ॥

एवं प्रपञ्चस्य सत्यत्वमुपपाद्य तत्प्रसङ्गेनाविर्भावतिरोभावौ निरूप्य प्रस्तुतं कार्यस्य, कारणस्या, धिकरणस्या, पादानस्य, सम्बन्धस्य, कर्मणः, कर्तुः, प्रकारस्य च ब्रह्मरूपत्वमेवेति श्रीभागवतपद्येनाहुः यत्रेत्यादि—

> यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ।
> स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः ॥ १८ ॥
> इति भागवते पद्ये सर्वेषां ब्रह्मता श्रुता ।
> श्रुतिसूत्रैः स्मृतिगणैर्दृष्टिः स्वर्णार्थिनो यथा ॥ १९ ॥

यदेति कालार्थकदाप्रत्ययेन कालस्यापि ब्रह्मत्वमुक्तमतएव "कालोऽस्मी" ति भगवद्वाक्यमेतेनास्मन्मते न द्वैतलेशः । एतेनोपादानत्वे निमित्तत्वानुपपत्तिस्तत्त्वे चोपादानस्येति परास्तं सर्वभवनसमर्थत्वाद्ब्रह्मणः । विरुद्धधर्माश्रयत्वस्य ब्रह्मणो लक्षणत्वात्तच्च प्रागेव निरूपितम् ॥ १८ ॥ इतीत्यादि—श्रुतयः "सर्वं खल्विदं ब्रह्मे" त्यादयः । "एवं चात्मा कात्स्न्यं" मित्यादिसूत्राणि. "भूतानि विष्णुर्भुवनानि विष्णु" रिति विष्णुपुराणे "वासुदेवः सर्वमिति स महात्मा सुदुर्लभ" इति गीतायाम् ॥ १९ ॥

दृष्टान्तमुपपादयन्ति सुवर्णस्येत्यादि—

सुवर्णस्य च ये खण्डाः कटका मुद्रिकादयः ।
सुवर्णत्वेन गृह्णाति तथा ब्रह्मविदो मतिः ॥ २० ॥

"यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु। एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः" इति श्रीभागवतद्वादशस्कन्धवाक्यात् "यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्व"दिति तस्यैवैकादशस्कन्धवाक्याच्चेति भावः ॥ २० ॥

तत्र श्रुतिं प्रमाणयन्ति यथेत्यादि—

"यथा सौम्ये" त्यादिश्रुतौ स्पष्टमेव निरूपितम् ।
तथा "तत्त्वमसी" त्यत्राभेदोंऽशांशिविचारतः ॥ २१ ॥

"यथा सौम्य ! एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवती" त्यादिश्रुतौ यथा मृत्तदवयवयोरभेदस्तथा तत्त्वमसीत्यत्राभेदोंऽशांशिनोरभेदादित्यर्थः । अत्र सर्वेषां मतसङ्ग्रहश्लोकः—केचित्तत्त्वमसीति वाक्यविषये तत्त्वंपदे लक्षणां केचित्तत्र ङसो लुकं विदधते भाष्यं तु केचिज्जगुः । केचिच्चिद्विषयादभेदमपरे छिन्दन्त्यतत्त्वं पदं सिद्धान्ते तु सुवर्णवज्जगदिदं ब्रह्मैव जीवस्तथा ॥ अस्यार्थस्तु केचित् शङ्कराचार्याः तच्छब्देन सर्वज्ञत्वादिविशिष्टं ब्रह्म त्वंशब्देनाल्पज्ञत्वादिविशिष्टो जीवस्तयोरभेदो न संभवतीति भागयोस्सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागे केवलं चिदंशमात्रग्रहणेनाभेदः सोऽयं देवदत्त इति वद्भागत्यागलक्षणां विदधते, केचित् रामानुजमाध्वशैवाः तत्त्वमित्यत्रसुपांसुलुक् पूर्वसवर्णाच्छेयाडाड्याया जाल इति सूत्रेण ङसो लुकं विदधते तस्यभावः, केचिद्रामानुजादिमतव्याख्यातारः भाष्यं व्याकरणभाष्यं प्रातिपदिकनिर्देशे यां यां विभक्तिं बुद्धिरुपजायते सा सा आश्रयितव्येत्यचःपरस्मिन्नितिसूत्रे तदितिप्रातिपदिकं तेन षष्ठीविभक्तेराश्रयेणेत्यर्थः पूर्ववत्, केचिन्निम्बार्काः चिद्विषयात् चित्त्वसाधर्म्यात् अभेदः, केचिन्माध्वैकदेशिनः श्वेतकेतोऽतत्त्वमसीति पदं छिन्दंति तत्रार्थस्तु तद्ब्रह्म त्वं नासि किंतर्हि जीवोऽसीत्यर्थः, सिद्धांते ब्रह्मवादिसिद्धांते सुवर्णस्यांशाः सुवर्णरूपास्तथा ब्रह्मांशं जगत् ब्रह्मैव तथा जीवोऽपि चिदंशो ब्रह्मानेन वाक्येन बोध्यते इत्यर्थः ॥ एवमुक्तानां मतानां खंडनसंग्रहश्लोकः ॥ तत्रोपक्रमसङ्गतिर्बहुविधा भग्ना प्रतिज्ञाश्रु-

तिर्भक्तिः स्याद्यदि न त्वमेव कथयेद्भेदे च वैषम्यता॥साधर्म्येऽपि तु भेद एव रसितश्छेदो न सम्यग्यतः सिद्धान्तः श्रुतिसम्मतो विलसति प्राज्ञैर्विचार्यं मुहुः ॥ २ ॥ एतदर्थस्तु शङ्कराचार्यादिव्याख्यानेषु उपक्रमस्य सङ्गतिर्बहुप्रकारेण भग्ना स्यात् तथाहि–तत्त्वमसीतिवाक्यं श्वेतकेतूपाख्यानेऽस्ति तत्रोपक्रमे "अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवती" त्यादिना एकविज्ञाने सर्वविज्ञानं प्रतिज्ञातं तदेकमेव चेत्सर्वं भवेत्तदोपपद्यते यथा सुवर्णकार्यं सुवर्णखंडाः सर्वं सुवर्णमिति सुवर्णज्ञानेन तज्ज्ञानंभवति तदर्थं "सदेव सौम्ये"त्यारभ्य निरूपितम् ततो जडस्य सर्वस्यापि सदात्मकत्वार्थं "ऐतदात्म्यमिदंसर्व"मित्युक्तं तत्र जडगतासत्यत्वादिदोषपरिहारार्थमाह "तत्सत्य"मिति तेनाविर्भावतिरोभावौ पदार्थानां ज्ञेयौ। पूर्वोत्तरयोर्जडजीवयोः सदात्मकत्वे हेतुमाह "स आत्मे"ति एवं जडस्य ब्रह्मात्मकत्वमुक्त्वा जीवस्याप्याह "तत्त्वमसी"ति॥ उपदेशश्चायं "आवृत्तिरसकृदुपदेशा"दिति ब्रह्मसूत्रात् ॥ अतः सम्पूर्णमहावाक्यमुपदेशः तत्र यथा "ऐतदात्म्य"मिति सदंशे न भागत्यागलक्षणा तथोत्तरत्रापि चिदंशे न भागत्यागलक्षणा । नापि श्वेतकेतुरवतारः पूर्वं स्तब्धत्वादिदोषकीर्तनात् । अतो ब्रह्मवाक्यत्वात्तदेकदेशस्तत्त्वमसीति केवलं जीवब्रह्मणोरैक्यं न बोधयति वाक्यभेदप्रसङ्गात् उपक्रमविरोधाच्चेति सर्वं श्रीमदाचार्यचरणैरुक्तम् ॥ एवं च "उपक्रमोपसंहारे योऽर्थस्तु प्रतिपाद्यते ॥ स एवोत्तरपक्षः स्यात्पूर्वपक्षस्ततोऽन्यथे" त्यभियुक्तोक्तेरुपक्रमविरोधेन लक्षणा नाङ्गीकार्येत्यर्थः॥ भेदवादिनामपि मते सर्व विज्ञानप्रतिज्ञाभंगो जगतो भिन्नत्वात् ॥ नहि सुवर्णज्ञाने मृद्विकारा ज्ञायन्ते किं तु सुवर्णविकारा एव, वास्तविकभेदाभेदवादिनां मते भेदज्ञानस्य वास्तवत्वेन तेषां भेदवादिवदुपक्रमविरोधः प्रतिज्ञाहानिश्च, किंच भक्तिर्लक्षणा यदि स्यात्तर्हि त्वंशब्दवाच्यस्य पिंडस्य ब्रह्मत्वमिष्टं न स्यात्तर्हि न त्वमसीत्येव ब्रूयात् त्वमल्पगुणोपाधिको ब्रह्म नासीत्यर्थः कथयति त्वेवं तस्माल्लक्षणा नाभिमता, भेदे च तस्य त्वमसीति व्याख्याने भेद एव स्थितस्तथा च जीवस्य भिन्नत्वात् कस्यचित् सुखं कस्यचिद् दुःखमिति ब्रह्मणि वैषम्यतेत्यर्थः एतच्चाग्रे वक्ष्यति भेदाभेदवादिमते चित्त्वसाधर्म्येणाभेदस्तथा च भेद एव रसितः पर्यवसित इत्यर्थः, एवं च भेदवादिवत्तेषामपि मते दोषः, अतत्त्वमसीति छेदस्तु न वैदिकसम्मतः इति श्रीमदाचार्यचरणोक्तेर्न सम्यक् तस्मिन्पक्षे

अतत् ब्रह्म त्वं नासीत्यर्थाज्जीवोऽसीति पर्यवसिते जीवत्वस्य स्वतः सिद्धत्वेन ब्रह्मत्वस्याप्राप्त्या च तादृशपदच्छेदो न सम्यगित्यर्थः अत एव पूर्वश्लोके छिन्दन्त्यतत्त्वं पदमित्युक्तं तत्रातत्त्वमवैदिकसम्मतं पदं छिन्दन्तीत्यपि श्लोकार्थः । सिद्धान्तः शुद्धाद्वैतसिद्धान्तः श्रुतिसम्मत उपक्रमोपसंहारश्रुतिसम्मत इति प्राज्ञैः पण्डितैर्विचार्यमित्यर्थः ॥ २१॥

एवमद्वैतपदार्थं निरूप्य शुद्धपदव्यावर्त्यमाहुरत्रैवेत्यादि–

अत्रैव शाङ्कराः प्राहुर्मायिकं नश्वरं जगत् ।
मायासम्बन्धतो ब्रह्म कारणं नान्यथैव हि ॥ २२ ॥

कार्यकारणविचारे शङ्करा एव शाङ्कराः स्वार्थेऽण्–ईदृशं घटपटाद्यात्मकं जगत् मायिकमतो नश्वरं नाशशालि तेषां मते प्रपञ्चस्य मायिकत्वेन तस्य कारणेन तादृशेनैव भवितव्यं कारणसजातीयत्वात् कार्यस्य तच्चाज्ञानमेव कारणं ब्रह्मणस्तु "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन" "मथात आदेशोनेतिनेती' त्यादिश्रुतिभ्य "इन्द्रो मायाभिः पुरुरूप ईयते" "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्यादिश्रुतिभ्यो निराकारत्वमकर्तृत्वमुपास्यस्याब्रह्मणत्वम् । किञ्च यद्यत्कर्तृ तत्तत्सधर्मकं यद्यत्साकृति तत्तन्नश्वरमित्यनुमानत आकारस्य नश्वरत्वेन च ब्रह्मणो निराकारत्वसिद्धिः॥ अज्ञानं चाहमज्ञ इत्यनुभवसिद्धं तस्य नामान्तरं माया चाविद्येति सा विचित्रपरिणामशीला तया विचित्रं जगत्प्रतीयते शुद्धसत्त्वप्रधाना माया मलिनसत्वप्रधानाऽविद्येति भेदः तत्र यथा जलदर्पणादिषु सूर्यप्रतिबिम्बवन्मायाविद्यादिब्रह्मप्रतिबिम्बिततयेशर्जीवव्यवहारः यथा वाऽऽकाशस्य वृक्षवनादिना परिच्छेदप्रतीतौ वृक्षवनाकाशादिव्यवहारस्तथाऽविद्यामायासम्बन्धेन जीवेशादिव्यवहारः अथवाऽङ्गुलिसम्पर्कादिना द्विचन्द्रादिप्रतीतिस्तथा मायासम्बन्धतो जीवेशादिप्रतीतिरत एव 'आभास एव चे' ति सूत्रे व्यासैर्जीवस्याभासत्वमुक्तं यथा रज्जौ सर्पाभासस्तथा ब्रह्मणि जीवाभास इति अत एव "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति श्रुतौ वाचैवारभ्यते विकारो घटादिर्न वस्तुतः सन्नित्यर्थः । "यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमय"मिति श्रीभगवद्वाक्येनापि मायिकत्वेन नश्वरत्वसिद्धेरतो भ्रान्त्यैव जगत्प्रतीतिरतो ब्रह्मण्यपि कर्तृत्वादिकं भ्रान्तिरेव । ननु "विश्वतश्चक्षुः" सह-

स्रशीर्षा" "सम्बाहुभ्यां धमति" "प्रज्ञानघनः" विश्वस्य कर्त्ता भुवनस्य गोप्ता" "जन्माद्यस्य यतः" कर्त्ता कारयिता हरिः" "अहं सर्वस्य प्रभवः" इत्यादिश्रुतिसूत्रस्मृतिभिः साकारस्य कर्तृत्वस्य च सिद्धत्वादिति चेन्न शुद्धब्रह्मणो दुर्ज्ञेयत्वेन शाखारुन्धतीन्यायेनोपासनार्थं सधर्मकत्वं ब्रह्मण्यारोप्य पश्चान्निषेधतया कर्तृत्वाद्यपेतं ब्रह्म बोधयति–उपासनया हि चित्तशुद्धौ सत्यामद्वैतस्फूर्त्याऽविद्यानिवृत्त्या ब्रह्मैव भवतीति तेषां मतं तन्न। "यदिदं किञ्च तत्सत्यमित्याचक्षते" "तत्सत्यं" सर्वं खल्वि" त्यादि "तदेतदक्षयं नित्यं जगन्मुनिवराखिल" मित्यादिवाक्याद्युक्तवाक्यतश्च जगतः सत्यत्वं ब्रह्मत्वं चोक्तमिति जगतो मायिकत्वे मानाभावात् प्रत्यक्षैकादशशाखासु च मिथ्यात्वकथनाभावात् कार्यकारणयोः साजात्याद् ब्रह्मणः कर्तृत्वं "यतो वे" त्यादि जन्माद्यस्ये" त्यादिवाक्यैः प्रतिपादितमसतोऽज्ञानस्य कारणत्वाभावात्।न चासतः स्वप्नस्य शुभाशुभफलसूचकत्वेन कारणत्वमिति वाच्यम् । जागरितदशायां दृष्टश्रुतस्य मननसम्बन्धेन स्वप्नदर्शनादतः सत एव कारणत्वमन्यथा स्वाप्निकभोजनाद्वास्तविकतृप्तिः स्यात् । "निष्कल" मित्यादिश्रुतौ लौकिकक्रियाकलासत्वादिगुणजन्यशरीरविकारीन्द्रियजडधर्मनिषेधपरत्वेन कथनात् । सामान्यनिषेधे तु "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीव्न्वती"ति कलायाः– "आसीनो दूरं व्रजती" त्यादौ क्रियायाः– "एको देवः सर्वभूतेषु गूढः" इत्यादौ गुणाना "मपाणिपादो जवनो गृहीते"ति– "उतामृतत्वस्येशान" इत्युक्त्या सर्वतः पाणिपादकथनादन्यथा शरीरस्याविकारीन्द्रियाणा "मणोरणीयान्महतो महीयानि"त्यादावणुत्वादिबोधकानां विरोधापत्तेः । "अथात" इत्यत्रेतिशब्दः प्रकारवाची तेन लौकिकप्रकारकं न भवतीत्यर्थः– व्यासचरणैः"प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूय"इति सूत्रं पठितं तत्र निषेधवाक्यैरेतावत्त्वं स्थूलत्वादिकं प्रकृतं लौकिकं प्रतिषेधति नतु ब्रह्मधर्मान् ततो ब्रवीति च भूय इति यत्र वाक्ये प्रकरणे वा निषेधति तत्रैव पुनस्तद्धर्ममाह श्रुतिः।अस्थूलाद्युक्त्वा "एतस्यैवाक्षरस्य प्रशासने गार्गि ! द्यावाभूमी विधृते तिष्ठत" इत्यर्थः यदिदं सूत्रं मूर्तामूर्त्तनिषेधपरं तर्हि प्रकृतैतावत्पदयोरन्यतरवैयर्थ्यापातः । अथवा प्रकृते ब्रह्मणि यदेतावत्त्वं तत्प्रतिषेधतीति " इन्द्रो मायाभि"रिति तु "रूपं रूपं प्रतिरूपो बभूव यत्तस्य रूपं प्रतिचक्षणाय–इन्द्रो मायाभिः पुरुरूप ईयत" इति मन्त्रस्तत्र माया ज्ञानं प्रति कारणं न तु ब्रह्मणो बहु-

स्वरूपत्वेऽन्यथा पूर्वार्द्धएव मायाभिः पुरुरूपो बभूवेति वदेत्। "यद्वा-चेत्यस्यार्थस्तु यद्वागाद्यगम्यं तत्प्रेरयितृ तदेव ब्रह्म विद्धि नेदं वागादि तर्हि कथं तस्य ज्ञानमितिचेत्तत्राह यदिदं श्रुतिप्रसिद्धं–उपासते वैदिका इति शेषः। यद्युपास्यस्याब्रह्मत्वमभिप्रेयात् पुनरिदंकारं न ब्रूयात् नेदं यदुपासतइत्येतावतैव सिद्धेः। यद्यत्साकृति तत्तन्नश्वरमित्यनुमाने तु जन्यत्वात् प्राकृतत्वाद्वेति हेतोरवश्यं वाच्यत्वेनेश्वरे तदभावात्। अ-ज्ञानं चेत्यादिकथनं त्वपेशलम्। तदज्ञानं ब्रह्मणि जीवे वा आद्ये ब्रह्म-ण आधारत्वापत्तौसविशेषत्वापत्तिः अज्ञानित्वापत्तिश्च जीवस्यत्व-ज्ञानरूपत्वमेवेति न द्वितीयः। जलादौ स्वच्छाधारे सति प्रतिबिम्बद-र्शनेन मायाया मलिनत्वेन मिथ्यात्वेन ब्रह्मणश्चारूपत्वेन प्रतिबिम्बा-सम्भवः अन्यथा वायोरपि काष्ठे स्यादित्यादि विद्वन्मण्डने बहुशो निरूपितम्। आकाशस्य तु न प्रतिबिम्बः किन्तु प्रभामण्डलस्य। किञ्च पञ्चीकरणप्रक्रिययाऽऽकाशे पृथिव्यंशत्वेन स्वरूपवत्तया प्रतिबिम्बत्वो-पपत्तेः वायौ त्वनुद्भूतरूपवत्त्वेन रूपवत्त्वाप्रतीतेः। 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इतिदृष्टान्तः एकस्य नानात्वे न तु प्रतिबिम्बत्वे। किञ्च प्रतिबिम्बपक्षे ब्रह्मणो बिम्बत्वापत्तौ सविशेषत्वापत्तिः। "आभा-स एव चे"ति सूत्रं त्वनाचारिब्राह्मणे ब्राह्मणाभासस्तथा तिरोहितान-न्दांशे ब्रह्माभास इति बोधकम्। रज्जुसर्पदृष्टान्तोऽपि न सम्भवति अन्यत्र वास्तविकदृष्टसर्पस्य दृश्ये रज्जौ तृतीयस्य द्रष्टुः सर्पाभासः अत्र जगतो वास्तविकत्वाभावात् ब्रह्मणश्चादृश्यत्वेन द्रष्टुश्चासंभवेन वैषम्यात्। किंच घटपटाद्यात्मनाऽऽभासे, यथा रज्जौ नाश्वाकाराभासः किन्तु सर्पाभास एव तत्सादृश्यात् एवं ब्रह्मण्यपि तादृशत्वापत्तौ सा-कारत्वापत्तिः। गन्धर्वनगरादिष्वपि वायुसम्बन्धस्य जायमानत्वेना-न्यस्याभावान्नात्र दृष्टान्तसम्भवः। वाचारम्भणवाक्यं तु ब्रह्माभि-न्नत्वबोधकमित्यग्रे वक्ष्यते। यदिदमितिश्लोके तु चक्षुरादिभिर्नश्वरं गृ-ह्यमाणं यत्तन्मायामनोमयं विद्धि इत्यन्वयेन स्वाप्निकस्यैव नश्वरत्वेन तस्यैव मायिकत्वात्। अत एव "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्व-रूपत्वादि"ति व्यासपादैः स्वाप्निकप्रपञ्चस्य मायिकत्वमुक्तमत एव "वैधर्म्याच्च न स्वप्नादिव" दित्यनेन जगतः स्वप्नादिवन्निषेधेन जगतो मायिकत्वाभावात्। श्रीप्रभुचरणैस्तु यदिदं यादवकुलं चक्षुरादिभि-र्गृह्यमाणं मायिकं नश्वरं विद्धि विप्रशापः कथमभूद्वृष्णीनामिति प्रश्नो-त्तरप्रकरणे निरूपितत्वात्। अतो न केनापि वाक्येन मायिकत्वम्।

किञ्च "मायिकत्वं पुराणेषु वैराग्यार्थमुदीर्यते" इति श्रीमदाचार्यचरणैरुक्तम्। उपासनार्थं धर्मारोप इत्यादिकमप्ययौक्तिकम् नहि शाखावत्प्रत्यक्षं ब्रह्म यस्मिन्नरुन्धतीवद्धर्मा आरोप्यन्ते। किञ्चोपहितस्य त्याज्यत्वेन पुत्रादिवत्तत्यागापत्तिः। किञ्च मिथ्याज्ञानेन न चित्तशुद्धिः अन्यथा प्रापञ्चिकज्ञानेनापि चित्तशुद्धिः स्यात्। किञ्च जीवन्मुक्त्युच्छेदापत्तिः ज्ञानोदयेऽविद्याशरीरनिवृत्तेः। किञ्च प्रवेशानुपपत्तिः जीवहानिरेव मोक्षः जीवस्य मायिकत्वेन मायानाशे तन्नाश इति दिक्॥२२॥

मायामूलस्यास्य मतस्यातो मायाजन्यान्यत्वे पृष्ट्वोभयं दूषयन्ति किञ्चेत्यादि—

किञ्च जन्या त्वजन्या वा मायाऽऽद्ये जनको हि कः।
अन्याभावात्तु ब्रह्मैव सविशेषत्वमागतम्॥ २३॥
द्वितीये त्वद्वैतभङ्गः कादाचित्कं त्वसङ्गतम्।
आत्मैवेदमग्रआसीदित्यादिश्रुतिवाधतः॥ २४॥
अनादित्वे तु सान्तत्वमिति पक्षोऽप्यसङ्गतः।
अनादित्वे त्वनन्तत्वं मायाया इति निश्चयात्॥ २५॥

आद्ये जन्येतिपक्षे। ब्रह्मैव जनकमिति चेत्तर्हि भद्रं सविशेषत्वं ब्रह्मण्यागतमित्यर्थः॥ द्वितीयइति अजन्येतिपक्षइत्यर्थः॥ अजन्यत्वेन नित्यत्वादद्वैतभङ्गः। कादाचित्कमिति माया कादाचित्केति तृतीयः पक्षः सोऽप्यसङ्गतः। कादाचित्कत्वेन सनिमित्तत्वाद्ब्रह्माणि तदभावेन वक्तुं न शक्यमित्यर्थः। तर्हि अनादिः सान्ता मायेति पक्षः स्यात्तत्तु सर्वथा अयोग्यमित्यत्र श्रुतिमाहुः आत्मैवेदमित्यादि। एवकारेणात्मनोऽन्यस्य व्यवच्छेदात्। आदिशब्देन सदेव सौम्येदमग्रआसीदित्यादिशब्दार्थः॥ यद्यदनादि तत्तदनन्तं यथा ब्रह्म इत्यनुमानेन मायाया अप्यनन्तत्वापत्तेः। अथानादिःसान्तः प्रागभाव इति नायं नियम इति चेन्न प्रागभावखण्डनस्योपपादितत्वेन न व्यभिचारः (मायाया भावपदार्थत्वेन तन्मते स्वीकारादपि प्रागभावदृष्टान्तो नयदत्ते)॥२३॥२४॥२५॥

एवं तन्मतं खण्डयित्वा प्रकृतमाहुरेतन्मतइति—

एतन्मते सुनिष्पन्नं साङ्कर्यं कार्यकारणे।
तन्निवृत्त्यर्थमाचार्यैः पदं शुद्धं विशेषितम्॥ २६॥

शङ्कराचार्यमतइत्यर्थः । अविद्यावच्छिन्नं चैतन्यं कार्यं मायावच्छिन्नं चैतन्यं कारणमिति साङ्कर्यमित्यर्थः । तन्निवृत्त्यर्थमद्वैतपदे विशेष्ये विशेषणतयाऽन्वितमित्यर्थः ॥ २६ ॥

एवं शुद्धपदप्रयोजनमुक्त्वा समासमाहुः शुद्धाद्वैतपदइत्यादि–

शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः ।
अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥ २७ ॥
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः ।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥ २८ ॥
इति ब्रह्मविदां हार्दं शुद्धाद्वैतं श्रुतेर्मतम् ।
तत्रोत्तमा मध्यमाश्च कनिष्ठा ह्यधिकारिणः ॥ २९ ॥
तेषां प्रतीतिः प्रथमस्कन्धे तु श्रीहुताशनैः ।
"इदं हि विश्व"मित्यत्र सुबोधिन्यां निरूपिता ॥ ३० ॥
सर्वं ब्रह्मैव तत्राऽऽद्ये द्वितीये भगवान्यथा ।
तथा विश्वमिदं सर्वं ब्रह्मकार्यं निजेच्छया ॥ ३१ ॥
कार्यरूपेण भेदो हि न भेदः कारणात्मना ।
भेदसत्वे ह्यभेदोऽत्र तादात्म्यं परिकीर्त्तितम् ॥ ३२ ॥
तृतीये भगवान् भिन्नो जगतः कर्तृतः स्फुटम् ॥
इति द्वैतप्रतीतिस्तु श्रुतिबाधान्न गृह्यते ॥ ३३ ॥
शुद्धाद्वैतविदां या हि प्रतीतिः सोत्तमा मता ।
भेदाभेदप्रतीतिस्तु मध्यमानां प्रकीर्त्तिता ॥ ३४ ॥
अतो हि मध्यमः पक्षः शुद्धाद्वैतानुरोधतः ॥
बोधाय बहुसन्दर्भे गोस्वामिपुरुषोत्तमैः ॥ ३५ ॥
श्रीमदाचार्यचरणैर्यत्रकुत्रापि दर्शितः ।

कर्मधारय इति शुद्धं च तदद्वैतमिति विग्रहः । न चाद्वैते सति साङ्कर्याभावः स्पष्ट एवेति शुद्धपदमपार्थमिति वाच्यम् । परेषां मते पूर्वं साङ्कर्यं ततोऽद्वैतं मन्मते तु सदैव शुद्धत्वमिति ज्ञेयमत एव स्पष्टतया बोधाय

षष्ठीतत्पुरुषमाहुः ।.अत्र शुद्धे कारणे कार्यस्याद्वैतमिति पक्षे कार्येऽशुद्धत्वमयं दोषः, शुद्धेन ब्रह्मणाऽद्वैतमिति तृतीयातत्पुरुषेऽपि, शुद्धाभ्यामद्वैतमितिपक्षे तार्तीयोऽपेक्षितः, शुद्धाभ्यां नामरूपाभ्यामिति समासे कारणेऽशुद्धत्वम्, एवं शुद्धस्य कार्यस्येति पक्षे कारणेऽशुद्धत्वं प्राप्तम्, एवं शुद्धानां पदार्थानामद्वैतमित्यत्रापि ॥ मायासम्बन्धरहितामिति न चाहंताममताध्यासस्य मायाकृतत्वेन मायासम्बन्धस्य स्वमतेऽपि सम्भव इति वाच्यम्।स्वमते मायाया अपि "मम माये"ति वाक्यात् भगवच्छक्तित्वेन तस्याश्चाभिन्नत्वेन न परमतवन्मायासम्बन्धः । किं चाध्यास एव मायिको न जीवः । जीवस्य मायिकत्वं तु पूर्वं निरस्तम् ॥ इतीति । श्रुतिरिति जातावेकवचनं नृसिंहतापिन्यां योनित्वं ब्रह्मणः समर्थयित्वा "सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाऽप्यल्पा" इत्युक्तम्। तथाऽपि सर्वरूपत्वेऽप्यल्पाः अणुपरिमाणाः।अग्रे च "श्वरः सर्वभूतादीनि सृष्ट्वा प्रविश्यास्त" इति निरूप्याग्रे "सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगत" इति वाक्यं पठितम् । अनेन परमात्मनः शुद्धत्वमुदितम् अग्रे च जगतोऽविद्यायाश्च सद्रूपत्वेन ब्रह्माभेदो ब्रह्मण्यविद्याभावो निरूपितः उपसंहारे "विष्णुरीशानो ब्रह्मान्यदपि सर्वं सर्वग" मिति वाक्यं पठितम् । तत्सर्वगं कारणभूतं ब्रह्म तदेव विष्ण्वादिरूपं घटादिरूपं चेतनाचेतनात्मकमित्यर्थः । एतदग्रे सर्वस्य जगतः शुद्धात्मत्वाय वाक्यं पाठितम् "सर्वमत एव शुद्धोऽबाध्यस्वरूपो बुद्धः सुखरूप आत्मे"ति । एवं च श्रुतिषु सर्वस्य शुद्धाद्वयत्वं स्पष्टमतः श्रुतेर्मतमित्यर्थः । तेषामिति अधिकारिणामित्यर्थः श्रीहुताशनैः श्रीमदाचार्यचरणैः "इदं हि विश्व" मित्यत्रेति "इदं हि विश्वं भगवानिवेतरो यस्मिन् जगत्स्थाननिरोधसम्भवाः । तद्धि स्वयं वेद भवांस्तथाऽपि वै प्रादेशमात्रं भवतः प्रदर्शितम् इतिश्लोकइत्यर्थः । अत्रेदं विश्वं भगवानित्युत्तमप्रतीतिः इदं विश्वं भगवानिवेति मध्यमस्य तत्र यथा भगवान् सच्चिदानन्दरूपस्तथा जगदिति इदं विश्वं भगवानितरो जगत्कारणत्वादिति कनिष्ठस्येति श्लोकार्थः ॥ तत्रेति अधिकारिष्वित्यर्थः । आद्ये उत्तमाधिकारिणि सर्वं भगवानेवेति सर्वत्र भगवत्स्फूर्त्तिः सदेत्युत्तमाधिकारिणः प्रतीतिः द्वितीये मध्यमेऽधिकारिणि, तृतीये कनिष्ठेऽधिकारिणि यथा घटोत्पादकः कुलालो घटतो भिन्नस्तथा भगवान् जगतो भिन्न इत्यर्थः । श्रुतिबाधादिति "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वं" "आत्मैवेदं सर्वं" "पुरुष

एवेदं सर्वं यद्भूतं यच्च भाव्यं" "द्वितीयाद्वै भयं भवति" "य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति" "योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि न स वेद यथा पशुः" इत्यादिश्रुतिबाधादित्यर्थः॥ शुद्धाद्वैतविदामिति सर्वत्र भगवत्स्फूर्त्त्या विषयान्तरानुसन्धानानुदयादिति भावः। भेदाभेदप्रतीतिरिति कार्यरूपेण भेदः कारणात्मनाऽभेद इति प्रतीतिरित्यर्थः। मध्यमानामिति अधिकारिणामित्यर्थः॥ शुद्धाद्वैतानुरोधत इति कार्यत्वेन भेदेऽपि ब्रह्मत्वं न व्यभिचरतीति शुद्धाद्वैतानुरोधात्तस्मादित्यर्थः। सन्दर्भइति ग्रन्थइत्यर्थः। "वाक्यसन्दर्भो ग्रन्थ" इति लक्षणात्॥२७।२८।२९।३०।३१।३२।३३।३४।३५ श्रीमदाचार्यचरणैरिति सुबोधिन्यादिषु यत्रकुत्रापि दर्शित इत्यर्थः॥

ननु भेदाभेदपक्षस्तु निम्बार्कभास्कराणामिति शङ्कायां स्वस्माद्भिन्नत्वं समर्थयन्ति निम्बार्केत्यादि—

निम्बार्कभास्कराचार्यौ भेदाभेदनिरूपकौ॥ ३६॥

तत्राऽऽद्यानां वास्तवः स भास्कराणामुपाधितः।

तत्राऽऽद्ये वास्तवो भेदो माध्वाचार्यवदेव हि॥ ३७॥

विभिन्नांशास्सदा जीवा न स्वांशा इति निश्चयः॥

अभेदश्चित्त्वसाधर्म्यादेवं तेषां मतस्थितिः॥ ३८॥

तत्रेति उभयोर्मध्यइत्यर्थः आद्यानां निम्बार्काणां स भेदाभेदः उपाधित इति उपाधिकृत इत्यर्थः। तत्रेति भेदाभेदपक्षइत्यर्थः। आद्ये निम्बार्कभेदाभेदे तत्राभेदो भेदश्चेति कोटिद्वये भेदो वास्तवः माध्वाचार्यवदिति दृष्टान्तेन माध्वाचार्यस्य मतमनूदितम्॥ ३६॥ ३७॥ माध्वाचार्याणां मते अंशा द्विविधाः करचरणादिवत्स्वांशाः पुत्रादिवद्विभिन्नांशाः तत्र स्वांशा मत्स्यादयः विभिन्नांशा जीवाः। अंशत्वं नाम राश्येकदेशत्वं माध्वानुयायिवनमालिदासस्तु तद्भिन्नत्वे सति तत्सदृशत्वमंशत्वं यथा चन्द्रमण्डलाच्छतांशो गुरुमण्डलम्। तथांशो नानाव्यपदेशादित्यादिषु तेन जीवेषु न कदाऽपि ब्रह्मत्वमिति। तद्वन्निम्बार्काचार्याणाम्। तर्हि कथं भेदाभेदस्तत्राहुरभेद इति चित्त्वसाधर्म्यादिति। यथा मुखं चन्द्र इत्यत्राह्लादकत्वादिधर्मसाम्यान्मुखे चन्द्रारोपान्मुखं चन्द्र इति व्यवहारस्तथा चित्त्वसाधर्म्याज्जीवो ब्रह्मेति व्यवहार इति भावस्तेषां निम्बार्काणाम्॥ ३८॥

कनिष्ठा सा प्रतीतिस्तु नास्मन्मतमवेक्षते।
अभेदो वास्तवः स्वांशा जीवा इति निजे मते॥ ३९॥
भेदः कार्यतया जातः क्रीडार्थन्तु हरीच्छया।
पश्चाल्लये कारणे हि स्थितिर्दृष्टा यथा मृदि॥ ४०॥

कनिष्ठाधिकारिप्रतीतिरतः कनिष्ठेत्यर्थः। निम्बार्कभेदाभेदप्रतीतिस्त्वित्यर्थः। अस्मन्मतं शुद्धाद्वैतमतम्। एवं भेदाभेदं निरूप्य स्वमते प्रतीयमानं भेदाभेदं निरूपयन्ति अभेदो वास्तव इति। स्वांशा ब्रह्मांशाः तेनांशांशिनोरभेदः स च वास्तव इत्यर्थः॥ क्रीडार्थमित्यादि"एकाकी न रमते स द्वितीयमैच्छत्""एकोऽहं बहु स्यामित्यादिश्रुतेः" "क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियः परईश!कुर्यु"रितिवाक्यात्। "क्रीडाभाण्डं विश्वमिद"मिति वाक्याच्च लयइति तिरोभावे। कारणे कार्यस्येति शेषः। "त्वय्यग्रआसीत्त्वयि मध्यआसीत्त्वय्यन्तआसीदिदमात्मतन्त्रे। त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मा"दित्यष्टमस्कन्धेऽमृतमथने ब्रह्मवाक्यात्। तदेव दृष्टान्तमुपपादयन्ति यथा मृदीति॥ ३९॥ ४०॥

पूर्वावस्थेति—

पूर्वावस्था तु मृद्रूपा घटावस्था ततोऽभवत्।
घटोऽपि मृत्तिकारूपो लये पश्चाच्च मृत्तिका॥ ४१॥
कार्यकारणयोरैक्यं स्वमते न परे मते।
नैम्बार्के नेदृशो मार्ग इति वोद्धव्यमञ्जसा॥ ४२॥

कारणावस्थेत्यर्थः। ततः कारणरूपान्मृदः। ननु घटावस्थायां कथमद्वैतं तत्राहुः घटोऽपीति। एवं च तिसृष्वप्यवस्थासु मृदेवैवं जगद्ब्रह्मैवेति न द्वैतसञ्चारः। अनेन "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति श्रुत्युक्तं संङ्गृहीतम्। श्रुत्यर्थस्तु यो विकारः पृथुबुध्नोदरादिः स वाचारम्भणं वाचिकक्रियात्मको न तु कारणाद्व्यक्तिभेदापादकः यथा सुप्तउत्थितउपविष्टे च पुरुषेऽवयवविन्यासभेदो न तु पुरुषभेदोऽतो नामधेयं कारणस्यैव। नामधेयं कारणमेव हि तत्तदर्थक्रियानिष्पत्त्यर्थं घटशरावादिनाम्ना व्यवह्रियतइति कारणादभिन्नं कार्यं तदाह "मृत्तिकेत्येव सत्यम्"। कारणरूपेण सत्यं न तु मिथ्या अन्यथा कार्याभावेन ब्रह्म कस्य कारणं भवेत्? कारणाभावे कारणप्रतिपादिका "यतो वे"त्या-

दिश्रुतयो विरुध्येरन्। यदि विकारे वाङ्मात्रतामभिप्रेयाद्वाचारम्भणं विकारो मृत्तिकैव सत्यमिति वदेत् तावतैव कार्यस्य मिथ्यात्वसिद्धेः नतु नामधेयमितिपदाभ्यां घटितं तेन कारणादभिन्नं कार्यमित्यभिप्रायादुक्तएवार्थः। किञ्च वाचारम्भणमिति वाक्यमुपक्रम्याग्रे "कथमसतः सज्जायेते"ति "सदेव सौम्येदमग्रआसी"दिति पठितमत एव सूत्रकार इमामेव श्रुतिं विषयीकृत्य "तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यवदत्। अर्थस्तु वाचारंभणमित्यादिशब्देभ्यस्तदनन्यत्वं कारणादभिन्नत्वं बोध्यतइत्यर्थः। अत्रादिपदेनेतिशब्दो, नामधेयपदं सदेवेत्यादीनि वाक्यानि च संगृह्यन्ते। परे स्वमताद्भिन्ने। शङ्कराचार्याः कार्यकारणयोरनन्यत्वं कार्यस्य मिथ्यात्वाश्रयेण कथयन्ति तेषां कार्यकारणयोरनन्यत्वं न सिध्यति सत्यमिथ्ययोरभेदानुपपत्तेः। अत्र सर्वमतोपन्यासखण्डने च विस्तरभिया नोच्यते। नैम्बार्कइति निम्बार्कस्येदं नैम्बार्कमतं तस्मिन्मतइत्यर्थः। ईदृशो जगद्ब्रह्मणोरैक्यबोधको मार्गः॥ ४१॥ ४२॥

भास्कराचार्यमतमाह सोपाधिक इति—

सोपाधिको भास्करे हि स्वस्माद्भिन्नस्तु सर्वथा॥
भेदपक्षे तु जीवानां सुखदुःखादिदानतः॥ ४३॥
वैषम्यनैर्घृण्यइति दूषणे द्वे परे स्थिते।
अनादि कर्म चाश्रित्य समाधाने त्वनीशता॥ ४४॥

तदनन्यत्वाधिकरणे वाचारम्भणवाक्यव्याख्याने कारणमेव हि कार्यात्मनाऽवतिष्ठते मृत्समन्वितं हि त्रिष्वपिकालेषु कार्यं नाश्वमहिषवद्देशतः कालतो वा व्यतिरिक्तमुपलभ्यते। कारणस्यावस्थामात्रं व्यतिरिक्ताव्यतिरिक्तं शुक्तिरजतवदागमापायिधर्मत्वात् अनृतमनित्यमिति च व्यपदिश्यते तदर्थमेव मृत्तिकेत्येव सत्यमित्युक्तम्। भेदस्त्वौपाधिक इति "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेराप" इत्यादिक्रमेण जीवस्योत्पत्तेरनुक्तत्वात्। "अजो नित्यः शाश्वतोऽयं पुराणः" "अविनाशी वाअरेऽयमात्मे"त्यादिश्रुतीनामन्यथाकर्तुमशक्यत्वेन चोपाधिकृतभेदाभिप्रायेण विस्फुलिङ्गश्रुतिर्विपरिणेयेत्यङ्गीकृत्याणुत्वं संसारदशायां लिङ्गशरीराभिप्रायेण मनसो लिङ्गस्य चाणुत्वात् वस्तुतो व्यापक इति चाङ्गीकृत्य जीवस्यांशत्वमुपाध्यवच्छिन्नत्वेनाङ्गीकृतम्। तथा च ब्रह्मणो निरवयवत्वेन "यथाऽग्ने"रिति श्रुतौ

दृष्टान्तकथनेन यथाऽऽकाशस्य पार्थिवाधिष्ठानावच्छिन्नत्वं तथा जीवोऽपि ब्रह्मणो भिन्नाभिन्नस्वरूपस्तस्य भिन्नरूपमौपाधिकमभिन्नरूपं तु स्वाभाविकमित्यादि प्रतिपादितम् भास्कराचार्यैरतस्तेषां मते सोपाधिको भेदाभेद इत्यर्थः। स्वमते व्यतिरेकमाहुः स्वस्मादिति स्वमते जीवस्याणुत्वं वास्तवं "एषोऽणुरात्मा चेतसा वेदितव्य" इति श्रुतेः। लिङ्गशरीराभिप्रायकथनेन लक्षणाङ्गीकारे गौरवात् बीजाभावाच्च। "एष महानज आत्मे" त्यादिव्यापकश्रुतीनां ब्रह्मप्रकरणस्थत्वादेव "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारा" दिति तत्त्वसूत्रं सङ्गतं भवति। सूत्रार्थस्तु जीवोऽणुर्न अतच्छ्रुतेः एष महानित्यादिना इतिचेन्नेतराधिकारात् इयं श्रुतिर्ब्रह्माधिकारे पठिता तस्मादित्यर्थः। विस्फुलिङ्गश्रुत्या जीवस्योद्गम एवोच्यते नोत्पत्तिरिति सिद्धान्तादतो नाजो नित्य इत्यादिश्रुतिविरोधः। आकाशादिसृष्टौ तु क्रमेणोत्पत्तिः तत्रा"ग्न्यन्नात्पुरुषः स वाएष पुरुषोऽन्नरसमय"इत्युक्तेर्जीवस्य प्रादुर्भाव उक्तः तच्छब्देनोपादानात्। विस्फुलिङ्गन्यायेन तु सर्वस्योत्पत्तिरेकरीत्या उपाधिकल्पनायां प्रमाणाभावः। व्यापकत्वं तु ब्रह्मत्वेनोत जीवत्वेन? आद्ये शङ्करमतप्रवेशः द्वितीये नैयायिकमतप्रवेशेनौपाधिकभेदस्य निरासेन स्वमतप्रच्युतिः। किञ्च व्यापकत्वे देवदत्तेनाम्रे भक्षिते यज्ञदत्तस्यापि तद्रसानुभवापत्तिः आत्ममनःसंयोगकारणस्य तत्रापि सत्त्वात्। किञ्च जीवब्रह्मणोर्व्यापकत्वे नियम्यनियामकश्रुतिविरोध इति दिक्। न चाणुत्वे सकलशरीरचैतन्यानुपलम्भः प्रभावदुपपत्तेरित्यादिपूर्वमुदितम्। स्वमते भेदस्तु सुवर्णखण्डवदंशांशिभावेन स्पष्ट एवेति पूर्वापरावलोकनेन महद्वैलक्षण्यमत आहुः सर्वथेति। एवं भास्करमतं दूषयित्वा वास्तविकभेदे दूषणमाहुः भेदपक्षे त्विति भेदपक्षे तावत् "अपि वा तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति" "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या" दित्यादिषु श्रुतिषु सर्वविज्ञानप्रतिज्ञा मृत्पिण्डदृष्टान्तश्च विरुध्येत ॥ ४३ ॥ किञ्च कस्यचित्सुखं कस्यचित् दुःखमिति वैषम्यं परक्लेशाभावकरणसामर्थ्यवत्त्वे तदकरणे नैर्घृण्यं परे ब्रह्मणि। ननु स्वार्जितकर्मणा प्राप्तं सुखं दुःखं भुज्यते उत्तरोत्तरकर्मणः पूर्वं पूर्वं कर्म निमित्तम्। कर्मणश्चानादित्वान्नेश्वरे दोषप्रसक्तिरत आहुः अनादिकर्मेति कर्मण एव फलदातृत्वे ईश्वरस्याप्रयोजनतयाऽनीश्वरवादापत्तिः। कर्मणो जडत्वेन तदनुसारेण फलभोक्तृत्वमुक्तं तत्रापि कर्मकारयितृत्वमीश्वरस्य तथा चा-

ह श्रुतिः "तमेव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषति तमेवासाधु कर्म कारयति यमेभ्यो लोकेभ्योऽधो निनीषति" एतेन "साधुकारी साधुर्भवति पापकारी पापो भवती"ति श्रुतौ भगवत्प्रेरणया साधुपापकर्मकर्तृत्वं बोध्यम्। तमेवेति श्रुत्यनुरोधात्। अत एव "कर्त्ता शास्त्रार्थवत्त्वा"दिति सूत्रेण विध्यादिबोधितकर्मकर्तृत्वं जीवस्यातो विध्यादिशास्त्रार्थो जीवोद्देशेन प्रवृत्त इति कर्तृत्वंजीवस्योक्त्वा स्वतो वा भगवत्प्रेरणया वेति संशये "परात्तुतच्छ्रुते" रिति सूत्रेण परादीश्वरात्तस्य कर्तृत्वस्य श्रुतेरिति समाधानं सङ्गच्छते। तस्मात्कर्म्माश्रयत्वेन समाधाने त्वनीशत्वापत्तिः ॥ ४४ ॥

अत्र सर्वेषां मतस्य दुष्टत्वेन तेषां नामान्याहुरत्रापीति—

अत्रापि शाङ्कराः शैवा माध्वा रामानुजादयः।
निम्बार्का भास्करा भिक्षुर्येऽन्ये ते दोषसंश्रिताः ॥ ४५ ॥

कर्माश्रयत्वेन परिहारेऽपि शबलस्य ब्रह्मणो दोषपरिहाराय कर्माश्रयेण समाधानं शङ्कराचार्यैः कृतम्। शैवो रामानुजमततस्करो विशिष्टाद्वैतवादिनां तस्य मतं त्वग्रे विवेच्यं भिक्षुमतमप्यग्रे। दोषसमाश्रिता इति ईश्वरेऽनीश्वरत्वापत्तिरूपदोषविशिष्टा इत्यर्थः ॥ ४५ ॥

ननु तर्हि सिद्धान्तेऽपीमौ दोषौ स्थितौ नेत्याहुरात्मसृष्टेरिति—

आत्मसृष्टेर्न वैषम्यं नैर्घृण्यं चापि विद्यते।
श्रीमदाचार्यचरणैर्निबन्धइदमीरितम् ॥ ४६ ॥
श्रीमत्प्रभुवरैर्विद्वन्मण्डनेऽपि निरूपितम्।
रमणार्थमिदं विश्वमुच्चनीचादिभावतः ॥ ४७ ॥
आत्मरूपं चकारातो हरिर्यस्मान्न दूषणम्।

"तदात्मानं स्वयमकुरुते"ति श्रुत्या ब्रह्मैव जगदाकारेण स्वेच्छयैव रमणार्थमुच्चनीचादिभावेन जातमिति बोधितमतोऽभिन्नत्वान्न वैषम्यं नापि नैर्घृण्यमित्यर्थः। निबन्धे शास्त्रार्थे। विद्वन्मण्डने इति तत्र हि पूर्वं जीवानामानन्दादितिरोधाने मिथ्याज्ञानादिप्रसक्तावुपस्थितहान्यकृताभ्यागमदोषपरिहाराय स्वेच्छाया एव हेतुत्वमुक्त्वाऽन्यथा जगत्स्थितिसंहारेऽपीमौ दोषौ प्रसज्येयातामित्युक्त्वैतत्साधकयुक्तीर्विस्तरशो निरूप्य "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य"

इति सूत्रमुपन्यस्य "एकोऽहं बहु स्या" मिति प्रपञ्चे रमणेच्छया हि भगवान् क्रीडार्थं कृतप्रयत्नः विविधमर्यादादिरूपः जन्मकालादारभ्या-मोक्षं विचारितवान् तदाऽहि क्रीडैव मुख्याऽन्यत्सर्वमुपसर्जनीभूतम् । तथा च तदपेक्षो भगवान् तदनुसारेणैव कारयति यतो विहितस्य यागादेः प्रतिषिद्धस्य विप्रहननादेरवैयर्थ्यमेव भवेत् मर्यादाभावे तु स्वर्गनरकादिदातृत्वेन विधिनिषेधवैयर्थ्यं भवेदित्युक्तम् अतः कृतहा-न्यकृताभ्यागमवैषम्यनैर्घृण्यादिरूपदूषणे नेत्यर्थः ॥ ४६ ॥ ४७ ॥

शक्तिशक्तिमतोर्भेदाभेदो यः स न बाधकः ॥ ४८ ॥
तत्र भेदो न चैवास्ति शक्तेर्ब्रह्मत्वनिश्चयात् ।
भिन्नत्वे तु जडत्वं स्याद्भेदो यो बोधनाय सः ॥ ४९ ॥
धर्मधर्मिविचारेऽपि ज्ञेयमेवं विचक्षणैः ।
प्रकाशाश्रयदृष्टान्तेऽप्यभेदो बोध्यते किल ॥ ५० ॥

एवं प्रासङ्गिकं वैषम्यादिदोषं परिहृत्य शक्तिशक्तिमतोर्भेदं परिह-रन्ति शक्तिशक्तिमतोरिति ॥ तत्रेति ब्रह्मणीत्यर्थः ॥ ननु "प्रकाशाश्र-यवद्वा तेजस्त्वा" दितिन्यायेन प्रकाशप्रकाशाश्रययोर्भेदाभेद इति चेत्तत्राहुः प्रकाशाश्रयेत्यादि–सूत्रार्थस्तु ब्रह्मधर्मा भिन्ना उताभिन्ना इति संशये धर्माणां नित्यत्वेन भिन्ना इति प्राप्तआहुः प्रकाशेत्यादि । वाशब्दः पूर्वपक्षनिरासार्थः यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशतो न भिन्नाः एवं ब्रह्मधर्मा ब्रह्माभिन्नाः कुतस्तेजस्त्वात् यथा तेजः सूर्यश्च तेज एव "सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वाऽरेऽयमात्मा कृत्स्नः प्रज्ञानघन एवे"तिश्रुत्या एकरूपत्वकथनादत्रापि तेजस्त्वदृष्टान्तेन सर्वं ब्रह्मैवेति धर्मिधर्माभेद एव बोध्यते ॥ ४८ ॥ ४९ ॥ ५० ॥

धर्माणां ब्रह्मत्वे द्वितीयं सूत्रं प्रमाणमाहुररूपवदित्यादि–

अरूपवत्सूत्रवाक्ये धर्माणामपि ब्रह्मता ।
निरूपिता प्रभुवरैः श्रीविद्वन्मण्डने स्फुटम् ॥ ५१ ॥

सूत्रं तु "अरूपवदेव हि तत्प्रधानत्वा"दिति तत्त्वसूत्रइत्यर्थः । अर्थस्तु रूप्यते व्यवह्रियतइति रूपं सर्वव्यवहारविषयत्वं तद्वद्विश्वं तद्विलक्षणं ब्रह्मेत्यर्थः । अथवा रूप्यते व्यवह्रियतेऽनेनेति रूपं करायुच्यते यथा लोके करादिभिन्नतदभिमानी रूपवद्भिन्नः एवं ब्रह्म न निरूप्यते किन्तु ब्रह्मै-

व निरूप्यते इति रूपवदित्यर्थः । तत्राहुस्तत्प्रधानत्वात् सर्वेषां वेदान्तानां ब्रह्मैव प्रतिपाद्यं यतः करादीनामपि ब्रह्मत्वेनैव निरूपणमन्यथा तेषामब्रह्मत्वे "सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्य" इति नियमव्याहृतिः अतः करादिनिरूपकाः साक्षाद्ब्रह्मप्रतिपादका एवेति। हि युक्तोऽयमर्थः। "यथा सैन्धवघन' इति "सत्यं विज्ञानमानन्दं ब्रह्मे" ति "आनन्दमात्रकरपादमुखोदरादि" रिति "आनन्दमयोऽभ्यासा" दिति श्रुतिस्मृतिन्यायैक्वाक्यतया सच्चिदानन्दरूपत्वं करादीनामवधेयम्। अत एव "आह च तन्मात्र" मिति सूत्रकारो जगाद। अर्थस्तु तन्मात्रमानन्दमात्रं करादीनां श्रुतिः स्मृतिश्चाहेति श्रीविद्वन्मण्डने धर्माणां ब्रह्मता स्फुटं निरूपितेत्यर्थः। योगियाज्ञवल्क्यस्मृतावपि "अथवा परमात्मानं परमानन्दविग्रह" मित्युक्तम् ॥ ५१ ॥

अतःपरं रामानुजाचार्यमतमेकदेशीति सूचयितुं स्वमतं तन्मते प्रविष्टमित्याशङ्क्य स्वमतस्य तस्मादतिरेकं साधयन्ति अथेत्यारभ्य विचक्षणैरित्यन्तम्।

अथ श्रीमन्निजाचार्यैर्निबन्धइदमीरितम्।

य: सर्वत्रैव सन्तिष्ठन्नन्तरः संस्पृशेन्न तत्।
शरीरं तन्न वेदेत्थं योऽनुविश्य प्रकाशते ॥ ५२ ॥

निबन्धइति शास्त्रार्थइत्यर्थः ॥ यः सर्वत्रेति–सर्वत्र पृथिव्यादिषु अन्तरो मध्यः तत्पृथिव्यादि न संस्पृशेत् लोकवत्तद्गतसुखदुःखादिभाङ् न भवतीत्यर्थः। शरीरं पृथ्व्यादि कर्तृ तमीश्वरं न जानाति यः पृथिव्यादिष्वनुप्रवेशं कृत्वा प्रकाशतइत्यर्थः । तथा च श्रुतिः "यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति "य आत्मनि तिष्ठन्नात्मानमन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयती" त्यादि ॥ ५१ ॥ ५२ ॥

इतीति—

इति तेन शरीरन्तु हरेस्तु चिदचित्स्मृतम्।
जडजीवान्तःस्थितानां भेदेन सुनिरूपणैः ॥ ५३ ॥

निबन्धे यन्निरूपितं तेन निरूपणेनेति योजना ॥ ५३ ॥

तत्त्वत्रयमिति—

तत्त्वत्रयं समायाति विशिष्टाद्वैतवादिनाम् ।
रामानुजानामिति चेन्न दोषोऽस्मन्मते शृणु ॥ ५४ ॥

विशिष्टाद्वैतवादिनां तत्त्वत्रयं समायाति स्वमतइति शेषः । विशिष्टाद्वैतमित्यस्य विशिष्टं च विशिष्टं च विशिष्टे विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति समासः सूक्ष्मचिदचिद्विशिष्टं कारणं स्थूलचिदचिद्विशिष्टं कार्यं तयोरद्वैतमित्यर्थः ॥ ५४ ॥

जडजीवान्तरात्मान इति कार्ये भिदा श्रिता ।
वहु स्यान्तु प्रजायेयेत्यादिश्रुतिषु वर्णनात् ॥ ५५ ॥

कार्ये भिदेति भेदोऽपि न घटपटवत् किन्तु मृद्घटशरावत् । रामानुजाचार्याणां तु वस्तुतो भेदः ॥ ५५ ॥

न कारणे भिदा ज्ञेया तत्रैकोऽहं निरूपणात्।
आत्मैवेदमग्रआसीदित्यादिषु च दर्शनात् ॥ ५६ ॥

तत्र कारणावस्थायां आत्मैवेत्येवकारेणाचितो निषेधात् इत्यादिषु श्रुतिषु ॥ ५६ ॥

तत्रैकाकी न रमते द्वितीयेच्छा निरूपिता ।
श्रुतिविद्भिरतो ज्ञेयं ब्रह्मैकं नान्यदेव हि ॥ ५७ ॥

नान्यदिति ब्रह्मातिरिक्तं नान्यदित्यर्थः ॥ ५७ ॥

अन्यस्य च स्थितौ तत्र द्वितीयस्य च सम्भवात् ।
रमणार्थं द्वितीयेच्छा श्रुत्युक्ता भग्नतामियात् ॥ ५८॥
एकोऽहमित्यपि मुधा तस्माच्छ्रुतिविरोधतः ।
तत्त्वत्रयं कारणे हि त्याज्यमेव विचक्षणैः ॥ ५९ ॥

त्याज्यं नाङ्गीकर्त्तव्यमित्यर्थः ॥ ५८ ॥ ५९ ॥

यत्र येनेति—

यत्र येनेति पद्येतु निवन्धे सुनिरूपितम् ।
प्रकृतिः पुरुषश्चैव कालश्च हरिरेव हि ॥ ६० ॥

पद्ये पद्यव्याख्याने। निबन्धे शास्त्रार्थे। सुनिरूपितमिति श्रीमदाचार्यचरणैरिति शेषः। इदं पूर्वं निरूपितं पद्यं श्रीभागवतस्थं श्रीमदाचार्यचरणैर्निबन्धे स्थापितम् ॥ ६० ॥

एकमेवाद्वितीयं तु ब्रह्म सर्वत्र रूप्यते।
यः सर्वत्रैवेतिपद्ये गोस्वामिपुरुषोत्तमैः ॥ ६१ ॥
सृष्टिकाले भगवतः शरीरं चिदचित्स्मृतम्।
अन्तर्यामिण एतेन विशिष्टाद्वैतमेव यत् ॥ ६२ ॥
तदेकदेशि विज्ञेयमित्युक्तं तैर्विचक्षणैः।

यः सर्वत्रैवेतिपद्ये इति निबन्धटीकाव्याख्याने आवरणभङ्गइत्यर्थः ॥ ६१ ॥ ६२ ॥ विचक्षणैरिति एतन्मतस्यैकदेशित्वनिरूपणेन बुद्धिमत्त्वरूपाकाङ्क्षाया उत्थितत्वान्न समाप्तपुनरात्तदोषः। एवं रामानुजाचार्यमतं दूषयित्वा तत्तस्करमतखण्डनमाहुः शैवोऽपीति

शैवोऽप्येतेन विध्वस्तो यतस्तच्चोर एव हि ॥ ६३ ॥

शैवस्तावद्विशिष्टाद्वैतमेवाङ्गीकृत्य "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदि" ति श्वेताश्वतरश्रुतिं "आत्मा तस्याष्टमी मूर्ति" रिति स्मृतिं चोदाहृत्य ब्रह्मावयवत्वेन विशिष्टांशं जीवस्य प्रकृतेश्चाह। सर्वत्र शिवपरत्वेन श्रुतिं स्मृतिं चाह च स तु एतेन विशिष्टाद्वैतखण्डनेन। मायां त्वित्यात्मेतिश्रुतिस्मृती कार्याभिप्राये इति न दोषः। शिवपरत्वादिखण्डनञ्च श्रीपुरुषोत्तमचरणैर्भाष्यप्रकाशे प्रहस्ताख्ये पण्डितकरभिन्दिपालाख्ये च निरूपितं ततोऽवलोकनीयम्। तच्चोर इति रामानुजमतचोरः कश्चिन्मध्वमतस्यापि तदेवोक्तं श्रीपुरुषोत्तमचरणैर्भाष्यप्रकाशे "रामानुजमतस्यैव चोरो मध्वमतस्य च। क्वचित् क्वचित्तद्विरुद्धां शैवः श्रुतिमुदाहरन्" भिन्नप्रस्थानं मन्यतइति ॥ ६३ ॥

एवं शैवमतं दूषयित्वा विज्ञानेन्द्रभिक्षुमतखण्डनमाहुर्मायोपाधिककर्तृत्वमिति—

मायोपाधिककर्तृत्वं भैक्षवे दृश्यते तु यत्।
तन्मायावादध्वंसेन ध्वस्तप्रायं विशेषतः ॥ ६४ ॥

भिक्षोः इदं भैक्षवं तस्मिन् भैक्षवे मतइत्यर्थः। स हि ब्रह्म न समवायि, नासमवायि, नापि निमित्तं किन्त्वधिष्ठानकारणं तल्लक्षणं च

यत्राविभक्तं येनोपष्टब्धं च सदुपादानकारणं कार्याकारेण परिणमते तदधिष्ठानकारणमेतल्लक्षणसमावेशस्तु यत्र ब्रह्मण्यविभक्तं विभागरहितं येन ब्रह्मणा–उपष्टब्धं च सत् साक्षितामात्रेणाङ्गीकृतं च सत् उपादानकारणं प्रकृतिरूपं कार्याकारेण जगद्रूपेण परिणमते तद्ब्रह्माधिष्ठानकारणमित्यर्थः। ब्रह्मणश्च कर्तृत्वं सोपाधि मायौपाधिकं परिणामित्वरूपोपादानत्वञ्च प्रकृतितत्कार्याद्यौपाधिकमिति जगाद तदसङ्गतम्। "आत्मैवेदमग्रआसी" दित्यादिश्रुतिषु प्रत्यक्षस्य जगतः पूर्वमात्मत्वादिकथनेनेतरस्याभावादविभागाख्यस्वरूपसम्बन्धस्य तदानीं वक्तुमशक्यत्वेनाधिष्ठानलक्षणेनातिव्याप्तेः। "एकोऽहं" मिति श्रुतिविरोधाच्च "ब्रह्म ह वाइदमग्रआसीत्" "आत्मैवेदं सर्वम्" "तदात्मानं स्वयमकुरुत" "बहु स्यांप्रजायेये" त्यादिश्रुतिषु ब्रह्मण उपादानत्वकथनान्न प्रकृतेरुपादानत्वसिद्धिः। मायौपाधिकं कर्तृत्वं प्रकृतितत्कार्यौपाधिकं परिणाम्युपादानत्वमित्यप्यसङ्गतम् "आनन्दरूपममृतं विभाति" "सच्चिदानन्दरूपाय कृष्णाये" त्यादि श्रुतिभि "रानन्दमात्रकरपादमुखोदरादि" रित्यादिस्मृतिभिश्च ब्रह्मण आनन्दाकारत्वे सिद्धे मूलरूपस्योपाधिकल्पनायां बीजाभावात्। विकारित्वपरिहारायौपाधिकत्वमुच्यते तन्निरस्तं प्राक्। किञ्चौपाधिकपक्षस्य मायावादानुसारित्वात्तत्खण्डनेनैतस्यापि खण्डनप्रायत्वाच्चेत्याहुः तन्मायावादध्वंसेन ध्वस्तप्रायमिति। प्रायपदात्सर्वांशतो न ध्वस्तमतस्तन्मतमनूद्य खण्ड्यते। तथाहि—यज्जीवानां नित्यभिन्नत्वं व्यापकत्वं चाङ्गीकृत्याविभागलक्षणमभेदं चाङ्गीकृत्य सजातीयत्वे सत्यविभागप्रतियोगित्वमंशत्वं तदनुयोगित्वं चांशित्वं अविभागश्च "सति सम्पद्य न विदुः सति सम्पद्यामहे" इत्यादिश्रुत्या "प्रकृतिः पुरुषश्चोभौ लीयते परमात्मनि" इत्यादिस्मृत्या बोधितः। लिङ् श्लेषणे पदगतावित्याद्यनुशासनेन लयसम्पत्त्यव्ययशब्दानामविभागार्थकत्वात्। एवं च यथा शरीरकेशादिरंशो राशेश्चैकदेशः पितुश्च पुत्र इति दृष्टान्तत्रयमुक्त्वा सर्वे जीवाः पितरि पुत्रचेतना इव चिन्मात्रे ब्रह्मणि नित्यसर्वावभासके विषयभासनरूपं लक्षणं विहाय प्रलये लक्षणानन्यत्वं गच्छन्ति सर्गकाले च तत एव लब्धचैतन्यफलोपधाना आविर्भवन्ति पितुरिव पुत्रः अतो जीवा ब्रह्मांशा भवन्ति "आत्मैव जायते पुत्र" इत्यादिश्रुत्या पुत्रे पितुरविभागलक्षणाभेदवज्जीवेऽपि ब्रह्मणोऽविभागलक्षणोऽभेदः "बहु स्यां प्रजायेये" त्यादि श्रुत्या सिद्ध इति। अतो जीवा ब्रह्मांशा मुख्या एव

भवन्तीत्याह तदप्यरमणीयम् । नित्यभेदे सर्वविज्ञानप्रतिज्ञाभङ्गो वैषम्यादिदोषप्रसक्तिश्च । व्यापकत्वे "एषोऽणुरात्मा चेतसा वेदितव्य" इति श्रुतिविरोधः । ब्रह्मणो व्यापकत्वे जीवस्यापि व्यापकत्वे लयकथनस्य "नद्यः प्रविष्टा इव नामरूप" इति श्रुत्या "विशते तदनन्तर" मिति स्मृत्या च प्रवेशकथनस्यासङ्गतत्वं स्यात् । देहमात्रव्यापकताङ्गीकारे हस्तिकायव्याप्तजीवस्यापि पिपीलिकाकाये प्रवेशोऽप्यनुपपन्नः अविभागेन स्थितिरपि न सम्भवेत् "ब्रह्मैव सन् ब्रह्माप्येती"ति "ब्रह्म वेद ब्रह्मैव भवती" ति श्रुतिविरोधात् । एवकारेण ब्रह्मातिरिक्तस्थितिनिषेधात् । दृष्टान्तत्रयमपि स्वमताननुगुणम् । तथाहि केशादिकं शरीरस्य विकारः एवं ब्रह्मणो विकारो जीव इति विकारित्वं ब्रह्मण्यागतम् प्रकृतेः परिणामित्वाङ्गीकारे शरीरस्थानापन्ना प्रकृतिः केशादिस्थानापन्नो जीव इति प्रकृत्यंशत्वं न ब्रह्मांशत्वं स्यात्, एवं दृष्टान्तद्वयेऽपि बोध्यम् । "बहुस्या" मितिश्रुत्या ब्रह्मण एव सर्वभवनसिद्धयोपाधिकल्पनाया असङ्गतत्वात् स्वमतभङ्ग इति दिक् ॥६४॥

एवं भिक्षुमतं खण्डयित्वा शक्तिमतमुपन्यस्यन्ति शाक्तानां त्वित्यादि—

शाक्तानां तु मते ब्रह्म विश्वोपादानमेव हि ।
निमित्तकारणं शक्तिर्विकारित्वभयादतः ॥ ६५ ॥

॥ ६५ ॥ तद्दूषयन्ति—

तत्रात्मनो विकारित्वं श्रुतिशास्त्रविरोधि हि ।
"प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः ॥ ६६ ॥
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् । "
इति भागवते पद्ये उपादानत्वमीरितम् ॥ ६७ ॥
तद्विरुद्ध्येत मम तु ब्रह्मतो-न पृथक् च सा ।
मनस्त्वमिति पद्येतु शाङ्कराणाञ्च शाम्भवी ।
परिणामन्तु सम्प्राप्तेत्युक्तेर्बाधः प्रसज्यते ॥ ६८ ॥

शङ्कराचार्यरचितसुन्दरलहरीश्लोकविरोधमाहुः मनस्त्वमिति-पद्यं तु "मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परम् । त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवतिभावेन बिभृषे,, इति ॥ ६६ ॥ ६७ ॥ ६८ ॥

पवनमयि ! पावकमयि क्षोणिमयि ! गगनमयि !
कृपीटमयि ! रविमयि ! शशिमयि ! दिङ्मयि !
समयमयि ! प्राणमयि ! शिवे ! पाहि" ॥ ६९ ॥
इति दुर्वाससा प्रोक्तं सर्वात्मत्वं विरुद्ध्यते ।
सर्वोपनिषदो या हि ब्रह्मतत्त्वनिरूपिकाः ॥ ७० ॥

दुर्वाससेति ललितास्तवरत्नइति शेषः ॥ ७० ॥

नास्तीति—

नास्ति शक्तेर्वर्णनं हि कारणत्वं तु दूरतः ।
व्यासैस्तु प्रकृतेः सर्वकारणत्वं तिरस्कृतम् ॥ ७१ ॥

यत्र वर्णनमेव नास्ति तत्र कारणत्वस्य सम्भावनाऽपि नास्तीत्यर्थः । ननु केषांचिच्छाक्तानां मते शक्तिरेव ब्रह्म सैव समवायिकारणम् किञ्च साङ्ख्यमतेऽपि प्रकृतेरपि तत्त्वमितिचेत्तत्राहुर्व्यासैरिति साङ्ख्यमतखण्डनेन सर्वकारणत्वं समवायिनिमित्तकारणत्वं तिरस्कृतं ब्रह्मसूत्रैरित्यर्थः ॥ ७१ ॥

तर्हि समवायिनिमित्तकारणं ब्रह्म इतिचेत् लोके समवायिनिमित्तकाणयोर्भेदात् कथमुभयं ब्रह्म यथा समवायिकारणं मृत् निमित्तकारणं कुलालदण्डचक्रचीवरादिरित्याशङ्कामपहरन्ति ब्रह्मण इति—

ब्रह्मणः समवायित्वनिमित्तत्वे निरूपिते ।
ऋग्वेदे तु यतो देवीसूक्तमस्ति तु तत्र हि ॥ ७२ ॥

निरूपितइति व्यासैरिति शेषः 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'योनिश्च हि गीयते' इत्यादिनाऽनयोरर्थस्तु पूर्वं समवायिकारणं प्रकृतिरेवेति प्राप्ते आह प्रकृतिश्चेति मृत्प्रकृतिर्घटः तन्तुप्रकृतिः पट इत्यादौ प्रकृतिशब्दः समवायिनमाह एवं च ब्रह्म समवायिकारणं चकारान्निमित्तकारणं कुतः प्रतिज्ञादृष्टान्तानुपरोधात् "अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवती" ति प्रतिज्ञा दृष्टान्तो "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवती" ति अनयोरनुपरोधात् अबाधनादित्यर्थः । द्वितीये जडानां ब्रह्मैव कारणं चेतनेषु तु योनिबीजयोः समवायित्वदर्शनात् पुरुषत्वात् शक्तिवादनिराकरणोपचारः । किञ्च "तदात्मानꣳ स्वयम-

कुरुत" "यतो वे" त्यादि "जन्माद्यस्य यतः शास्त्रयोनित्वात्" "तत्तु समन्वयात्" "कर्त्ता कारयिता हरि" रिति "जन्माद्यस्य यतोऽन्वयादितरतश्चे" त्यादिश्रुतिस्मृतिश्रीभागवतादिषु ब्रह्मण एव समवायिनिमित्तत्वयोः सिद्धेस्तत्रान्वयात् समवायिकारणात् इतरतो निमित्तकारणात् इति श्रीमदाचार्यचरणैः सुबोधिन्यामुदितम्। "तत्तु समन्वया" दित्यर्थस्तु तद् ब्रह्म समवायिकारणं कुतः समन्वयात् सम्यगन्वयो यथा मृदो घटे तथा ब्रह्मणो जगतीति विशेषस्तु भाष्यकारैर्बहुशो निरूपितं तत्ततोऽवधेयम्। ननु ब्रह्मरुद्रादिकारणत्वं देव्या उदितं तत्राहुः ऋग्वेदइति ॥ ७२ ॥

देवीसूक्तेऽपि विष्णुर्देव्याः कारणमिति बोधाय देवीसूक्तमन्त्रमाहुरहमेवेत्यादि—

"अहमेव स्वयं वदामि जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं
सुमेधामहं सुवे पितरमस्य मूर्द्धन् मम योनिर-
प्स्वन्तःसमुद्रे ॥ ७३ ॥

देवेभिर्देवैः मानुषेभिर्मानुषैः जुष्टं सेवितं यं जीवं कामयइच्छामि तं तं जीवमुग्रं रुद्रं कृणोमि करोमीत्यर्थः ॥ ७३ ॥

एवमित्यादि—

एवं श्रुतौ तु देव्या हि स्वकारणतयोदितः।
पयोधिशायी यो विष्णुः स उक्तोऽतो न सा परा ॥ ७४ ॥

एवंरीत्येत्यर्थः। सेति देवीत्यर्थः। एवञ्च परत्वं सर्वजगत्कारणत्वं विष्णोरेवेति सिद्धम् ॥ ७४ ॥

"उग्रः कपर्दी श्रीकण्ठ" इतिकोषाच्छिवः स्मृतः।
अस्येति रुद्रो निर्दिष्टोऽ"हं रुद्राये" तिवाक्यतः ॥ ७५ ॥

कोषादमरकोषात्। वाक्यत इति "अहं रुद्राय धनुरातनोमी"ति तत्रत्यश्रुतिवाक्यत इत्यर्थः ॥ ७५ ॥

प्रक्रान्तत्वात् पिता ब्रह्मा तद्योनिः शक्तिरत्र हि।
तस्यास्तु जनको विष्णुः सिन्धुशायी निरूपितः ॥ ७६ ॥

प्रक्रान्तत्वादिति प्रक्रमप्राप्तत्वादित्यर्थः। पितेति रुद्रपिता निर्दिष्ट इति पूर्वेणान्वयः। एवं शक्तिपदेऽपि तद्योनिरिति तस्य ब्रह्मणो योनिः

कारणम् । अत्र हि देवीसूक्ते मन्त्रे मूर्द्धन्नित्यस्य मुख्यमित्यर्थः ।'सुपां सुलुगि' ति सूत्रेण सुब्लोपः । तर्हि शक्तेः किं कारणं ? तत्राह तस्यास्त्विति "मम योनिरप्स्वन्तःसमुद्र" इति मन्त्रेण निरूपित इत्यर्थः । मम शक्तेर्योनिः कारणं समुद्रे अप्सु अन्तः अस्तीति शेषः । समुद्रशायित्वं विष्णोरेवेति विष्णुः कारणमित्यर्थः ॥ ७६॥

अस्माकमिति—

अस्माकं व्यासचरणैर्यदुक्तं न ततोऽन्यथा ।
"अथातो ब्रह्मजिज्ञासे" त्युक्त्वा तल्लक्षणेन हि ॥ ७७ ॥

मतइति शेषः । व्यासचरणैरिति तदेव ग्राह्यमिति शेषः अन्यथा व्यासोक्तिविरुद्धम् । ननु व्यासचरणैः कस्य कारणत्वमुक्तं ? तत्राह "अथात" इत्यादि । इदं चोत्तरतन्त्रादिमं सूत्रं ब्रह्मणः ब्रह्मसम्बन्धी जिज्ञासा विचारः अथशब्दस्तावदारम्भार्थकः आरभ्यतइत्यर्थः । यतः कर्म्मादिभ्यो ब्रह्मज्ञानं पुरुषार्थसाधकं अतस्तज्ज्ञानाय विचार इति अतःशब्दार्थः ॥ ७७ ॥

"जन्माद्यस्ये" त्यादिसूत्रैः कारणं ब्रह्म कीर्त्तितम् ।
तन्त्रशास्त्रेण चेद्दूष्येत्तदवैदिकसम्मतम् ॥ ७८ ॥

ब्रह्म किं लक्षणकमिति शङ्कायां "जन्माद्यस्य यतः शास्त्रयोनित्वा" दित्युक्तमर्थस्त्वधस्तात्प्रतिपादितः "असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु । यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते" इति प्रतिज्ञाय "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ! ॥ बीजं मां सर्वभूतानां विद्धि पार्थ ! सनातन" मिति गीतायां पुरुषोत्तमवाक्यात् । अग्रेऽपि तत्रैव "परं ब्रह्म परं धाम पवित्रं परमं भवान् । पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा । असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे" इत्यर्जुनवचनात् "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तत" इति पुरुषोत्तमवाक्याच्च जगत्कारणत्वं श्रीकृष्णस्यैव न देव्याः । नन्वनेकेषु तन्त्रेषु तस्याः कारणत्वोक्तिरित्यत्राहुस्तन्त्रशास्त्रेणेति "श्रौतार्चनं तु विप्राणां विशेषेण भवेत्सदा । श्रौतागमार्चने क्षत्रे वैश्ये केवलमागम" मिति वाक्यात् "तन्त्रेषु दीक्षितो मर्त्यो वैदिकं न स्पृशेत्सदा । वैदिकश्चापि तन्त्रेषु दीक्षितं न स्पृशेत्सदे" तिवासिष्ठलैङ्गोक्तेः

"क्वचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि । वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिने" ति पराशरोक्तेः। पाराशरीयपुराणे "प्रत्यक्षवेद-सिद्धार्थः स ग्राह्यः सर्वचेतनैः। अप्रत्यक्षं श्रुतेरर्थं स्मरन्ति मुनिसत्त-माः॥ स्मृतयश्च पुराणानि भारतप्रमुखान्यपि । क्वचित्कदाचित्तन्त्रा-र्थकटाक्षेण मुनीश्वराः। अधिकारविशेषाणां प्रवदन्त्यर्थमास्तिकाः। ब्राह्मणः क्षत्रियो वाऽन्यो निःशङ्कं तत् परित्यजेत्॥ वर्णाश्रमपरिभ्रष्टः प्रायश्चित्तेष्वनुन्मुखः। वेदेतरागमं गत्वा पापी तद्धर्ममाचरेत्। वेद-बाह्यरताः शाक्ता बहवो नरकं गताः" इति कौर्मपुराणेऽपि ब्राह्मणानां गौतमशापेन त्रयीबाह्यत्वे जाते तैः स्तुतौ शिवकेशवावित्युपक्रम्य "च-कार मोहशास्त्राणि केशवः स शिवस्तथा। कापालं लाकुलं वामं भै-रवं पूर्वपश्चिमम्। पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः। क्वचित् क्वचित् पुराणादौ वेदमूलेऽपि सर्वथा। सन्ति निर्मूलतन्त्रांशास्ते तु ग्राह्या न वैदिकै" रित्यादि वाक्यानि सप्तशतीटीकायां नागोजीभ-ट्टेन भट्टोजीदीक्षितादिभिरप्युपनिबद्धानि । अत एवाश्वलायनगृह्यप-रिशिष्टे सन्ध्याप्रकरणे सावित्र्या ऋषिदेवता छन्दांस्यनुस्मृत्य दैवतमे-व चानुस्मृत्य, " तामेतां चतुरक्षरेण विभक्तां मन्त्रयोजितैः पञ्चभिश्चाग-ममन्त्रैर्यथाभागमात्मनि विन्यस्य भावये"दित्युक्त्वा हृदयादि षडङ्ग-न्यासमुक्त्वा एनमप्येके नेच्छन्ति स हि विधिरवैदिक" इति निरूपितं सङ्गतं भवतीति दिङ्मात्रमुदितं तदेवाह—तदवैदिकसम्मतमिति अवै-दिकानां सम्मतमित्यर्थः । वेदविरुद्धार्थस्य तन्त्रत्वेन व्यवहारः सर्व-निर्णयनिबन्धे श्रीमदाचार्यचरणैः " छलयोगस्तथा साङ्ख्यं शाक्तो मार्गोऽभिधीयते" इति साङ्ख्ययोगौ मिलितौ धर्ममार्गविरोधेनामेध्य-भक्षणसुरापानादिपोषितौ शाक्तो मार्गस्तत्र सप्त भेदा उक्ताः वैदिका, वैष्णवाः, शैवाः, शाक्ता, वामाः, सिद्धान्ताः, कौलाः, लोके व्यामोहकं शास्त्रं सप्तानां बोधकः शिवः। कलौ जनिष्यमाणानामसुराणां क्षयाय हि । सर्वेषां नरके वास" इत्युक्तम् । एतद्दीपिकायां त्याज्यत्वे हेतु-रुक्तः "महापातकिसंसर्गेऽपि महापातकित्वश्रवणा"दिति । तत्र" क-र्मासक्तास्तु ये तत्र वैदिकाः समुदाहृताः"। लोके सन्माननार्थं कर्मा-सक्ताः सिद्धान्तानां तु आसुरसिद्धान्तः सर्वं मिथ्येति कर्म सर्वथा त्यक्तव्यं बाधकमिति तथा भक्तिरपि केवलं वाचःपेशैर्मोहयन्ति ये ते सिद्धान्तास्तेषां लोकसङ्ग्रहो नियामकः, कौलानां तु न लोकापेक्षे-ति भेदः "पत्नीत्वं दीक्षया रण्डाश्चण्डा अपि भजन्ति हि। दिगम्बरा-

श्चर्मचिन्हाः सुरामांसपरायणाः। पापरूपा दुराचारास्ते कौलाः परिकीर्त्तिताः। तेषामनुग्रहनिग्रहादिकं दृष्टं फलं तन्मार्गसेवितया दुष्टतामसशक्त्या सिद्धान्तस्य लोके सन्माननं फलं ततो व्यामोहो लोकस्य भवतीत्युक्तम् । , वैष्णवास्तु गोपालनृसिंहसंयुक्तां शक्तिमुपासते ते यथा गोपालसुन्दरीनृसिंहसुन्दर्याविति, एवमेव शिवयुक्तां तामुपासते शैवाः, केवलशक्त्युपासकाः शाक्ताः, वामाश्च वामाचारेण सुरासम्बन्धादिना तामुपासते ते वामाः, अत्र तन्त्रे उक्तं "पञ्चप्रेतासनारूढां परब्रह्मस्वरूपिणीम् । ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पञ्च महाप्रेताः पादमूले व्यवस्थिताः" इति श्रीमदाचार्यचरणैस्तु तत्रैवैतन्निर्णयः कृतः तत्र त्रिपुरसुन्दर्यादिशक्तयः सेव्याः, योगश्च साध्य, इति बुद्धिः, तत्र नाधिकारे शैववैष्णवौ तस्याः शक्तेः पादत्वेन पञ्चप्रेतमध्ये निरूपितौ, न शब्दमात्रेण किञ्चिद् दुष्यति पदार्थस्त्वन्य एव अतो भूतादिरेव विष्णुशिवादिनाम धृत्वा तथोपासत इति तत्रोभयश्लोकेऽपि प्रेतमहाप्रेतत्वेनोक्ताः एवं च तन्त्रशास्त्रस्य वैदिकानामुपेक्षणीयत्वेन चतुःषष्ठितन्त्राणां प्रतिपाद्यार्थसहितानां नामानि लिख्यन्ते तत्र महामायाशम्बरतन्त्रम्--अन्यस्मिन् पदार्थेऽन्यथाप्रतिभासनरूपमायाप्रपञ्चरचनोपायप्रतिपादकमैन्द्रजालविद्यारूपम् ॥ १ ॥ योगिनीजालशम्बरतन्त्रम् ॥ योगिनीजालप्रतिपादकम् ॥ २ ॥ तत्त्वशम्बरतन्त्रम् ॥ इन्द्रजालविद्याविशेषः पृथिव्यादितत्त्वानामन्यत्रान्यबोधोपायप्रतिपादकम् ॥ ३ ॥ सिद्धिभैरवतन्त्रम् ॥ ४ ॥ मायिकभैरवतन्त्रम् ॥ ५ ॥ कङ्कालभैरवतन्त्रम् ॥ ६ ॥ कालाग्निभैरवतन्त्रम् ॥ ७ ॥ शक्तिभैरवतन्त्रम् ॥ ८ ॥ योगिनीभैरवतन्त्रम् ॥ ९ ॥ महाभैरवतन्त्रम् ॥ १० ॥ भैरवनाथतन्त्रमिति भैरवाष्टकमिदं कापालिकप्रतिपादकम् ॥ ११ ॥ ब्राह्मीतन्त्रम् ॥१२॥ माहेश्वरीतन्त्रम् ॥१३॥ कौमारीतन्त्रम्॥१४॥ वैष्णवीतन्त्रम्॥१५॥ वाराहीतन्त्रम्॥१६॥ इन्द्राणीतन्त्रम्॥१७॥ चामुण्डातन्त्रम् ॥१८॥ शिवदूतीतन्त्रम् । ब्राह्म्यष्टकमिदं तत्तद्देवताप्रतिपादकम् ॥ १९ ॥ रुद्रयामलम् ॥ २० ॥ भैरवयामलम् ॥ २१ ॥ शिवयामलम् ॥ २२ ॥ विष्णुयामलम् ॥ २३ ॥ स्कन्दयामलम् ॥ २४ ॥ ब्रह्मयामलम् ॥ २५ ॥ देवीयामलम् ॥ २६ ॥ यामलम् ॥ २७ ॥ इति रुद्रयामलान्यष्टौ सिद्धान्तप्रतिपादकानि चतुःषष्ठितन्त्राणामपि यामलत्वेन व्यवहारः । चन्द्रज्ञानतन्त्रं कामैश्वर्यादिषोडशनित्याप्रतिपादकं तिथिनामधेयं नित्येति

॥ २८ ॥ मालिनीतन्त्रं, समुद्रयानोपायप्रतिपादकम् ॥ २९ ॥ महासम्मोहनतन्त्रं जागृतामपि निद्रोपायप्रतिपादकम् ॥ ३० ॥ वामसेवितं वामकेश्वरतन्त्रम् चतुःशतीत्यपिकथ्यते ॥ ३१ ॥ महादेवतन्त्रं बटुकादिसिद्धकुलाचारप्रतिपादकम् ॥ ३२ ॥ वातुलम् ॥ ३३ ॥ वातुलोत्तरम् ॥३४॥कामिकम् चेति त्रीण्येतानि तन्त्राणि क्षेत्राकर्षणादिविधिप्रतिपादकानि ॥ ३५ ॥ हृद्भेदतन्त्रं कापालिकाचारप्रदर्शकम् ॥ ३६ ॥ तन्त्रभेदगुह्यतन्त्रयोः प्रकाशं रहस्यं वा परकृतमन्त्रतन्त्रप्रयोगाणां परावृत्त्युपायाः प्रदर्शिताः ॥ ३७ ॥ ३८ ॥ कलावादं कामशास्त्रं वात्स्यायनादिमतम् ॥ ३९ ॥ कलासारं रूपादिवृद्ध्युपायप्रतिपादकम् ॥ ४० ॥ कुण्डिकामतं गुटिकासिद्धिप्रदर्शकम् । गुटिकापानपात्रम् ॥ ४१ ॥ मतोत्तरतन्त्रम् रससिद्धिप्रकाशकम् ॥ ४२ ॥ वीणातन्त्रम् वीणानामयोगिनीसम्भोगस्याक्षिणीत्यस्या नामान्तरं तस्याः साधनोपायदर्शकम्॥ ४३ ॥ त्रोतलतन्त्रम् गुटिकाञ्जनपादुकासिद्धिप्रदर्शकम् ॥ ४४ ॥ त्रोतलतन्त्रोत्तरतन्त्रम् चतुःषष्टिसहस्रयोगिनीनां दर्शनोपायनिरूपकम् ॥ ४५ ॥ पञ्चामृततन्त्रम् । पृथिव्यादिपञ्चभूतानां साधनेन मरणाभावप्रतिपादकम् । कापालिकतन्त्रम् ॥ ४६ ॥ रूपभेदादिपञ्चतन्त्राण्युच्चाटनादिप्रतिपादकानि॥ ५१ ॥ सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशिदिगम्बरमताचारप्रदर्शकम् ॥ ५६ ॥ पूर्वतन्त्रादिदेवीमतपर्यन्तं तन्त्राष्टकं दिगम्बरैकदेशिक्षपणमताचारप्रदर्शकम् ॥ ६४ ॥ एवमेतानि तन्त्राणि मोहकानि त्याज्यानि वैदिकैरिति बोधाय लिखितानि ॥ ७८ ॥

तन्त्रशास्त्रस्याप्रामाण्यं प्रतिपाद्य चतुष्टयं प्रमाणमित्याहुर्वेदा इति—

वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ।
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥ ७९ ॥
एतद्विरुद्धं यत्सर्वं न तन्मानं कथञ्चन ।
इति श्रीमन्निजाचार्यैरुक्तं तन्त्राणि न प्रमा ॥ ८० ॥

वेदाः पूर्वोत्तरकाण्डस्थिता अर्थवादादिरूपा अपि यथा बृहस्पतिः स्वां वपामुदखिदत्, इत्यत्र वपोत्खेदे बृहस्पतेर्जीवनं न स्यादत इदं वाक्यं यज्ञप्राशस्त्याधायकम् । एवं ग्रावाणः प्लवन्ते इत्यपि यत्रैते तत्रान्यप्लवने कः सन्देह इति नाश्मनां प्लवने तात्पर्यमिति केचित् तन्न आद्ये बृहस्पतेर्देवत्वेन वपोत्खेदने न जीवस्यहानिरिति

द्वितीये तु सेतुबन्धनसामयिकी व्यवस्थामनुवदतीयमृगित्यादि ज्ञेयम् । विशेषतस्त्वन्यतोऽवधेयम् । श्रीकृष्णवाक्यानि गीतायां चकाराद्व्यासूत्राविरुद्धानि जैमिनिसूत्राणि एवं मन्वादिस्मृतीनां व्यासाविरुद्धत्वेन प्रामाण्यं समाधिभाषा श्रीभागवतम् ॥ ७९ ॥ ८० ॥

श्रीमदाचार्यचरणैरिति–

श्रीमदाचार्यचरणैरत एव निरूपितम् ।
शाक्तास्ताँश्चेत्ततो ब्रूयुस्ते सन्मार्गाद्बहिष्कृताः ॥ ८१ ॥

अणुभाष्यइति शेषः सन्मार्गात् ॥ ८१ ॥

इति सर्वेषु मार्गेषु दोषाः सन्ति ततो हरिम् ।
शुद्धाद्वैतावलम्बेन भजेत सुविनिश्चितम् ॥ ८२ ॥

शुद्धाद्वैतावलम्बेनेति "अखण्डाद्वैतभाने हि सर्वं ब्रह्मैव नान्यथे" ति सर्वत्र भगवद्दृष्ट्या विषयान्तराभावः फलमिति भावः । सुविनिश्चितमिति श्रुतिस्मृत्यादिष्वित्यर्थः ॥ ८२ ॥

भजधातोः सेवार्थकत्वेन सेवालक्षणं श्रीमदाचार्यचरणोक्तमाहुः चेतस्तत्प्रवणं सेवेति–

चेतस्तत्प्रवणं सेवा फलरूपा तु मानसी ।
तत्सिद्ध्यर्थं देहवित्तजनिः कार्या ततो भवेत् ॥ ८३ ॥
संसारदुःखनाशो हि ब्रह्मात्मत्वावबोधनम् ।
ब्रह्मज्ञस्य परप्राप्तिरानन्दवृततो स्फुटा ॥ ८४ ॥

इदं च सिद्धान्तमुक्तावल्यामुदितं तत्र हि कृष्णसेवा सदा कार्येति पूर्वमुक्तवन्तस्तच्छब्देन श्रीकृष्णस्य ग्रहणं हरिमित्युक्तत्वात् तद्ग्रहणं फलरूपा त्विति सा व्रजाङ्गनासु ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् इति श्रीभागवतवचनात् इयं सर्वात्मभावकाष्ठा तृतीयाध्याये भाष्ये स्फुटा तत्सिद्ध्यर्थं सर्वात्मभावरूपमानसीसेवासिद्ध्यर्थं तनुवित्ताभ्यां जन्यते या सा तनुवित्तजनिः उभयोः साधकत्वं नैकस्या इति बोधाय समस्तपदम् ॥ ८३ ॥ संसारेत्यादि– संसारोऽहन्ताममतारूपः । ब्रह्मात्मत्वावबोधनमिति "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतिसिद्धम् । "वासुदेवः सर्वमिति स महात्मा सुदुर्लभ" इत्यादिस्मृतिसिद्धम् सर्वस्य जगतो ब्रह्मत्वं तस्यावबोधनं याथार्थ्यज्ञानमित्यर्थः । तर्हि ब्रह्मज्ञानस्य किं फलमित्याहुः

ब्रह्मज्ञस्येति श्रीमदाचार्यचरणैर्भाष्ये "ब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पद्यते तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयत" इत्युक्तम्। नन्वत्र किं मानमत आहुः आनन्दवृततावितित आनन्दवल्ल्यामित्यर्थः। वल्ली तु वृततिर्लतेत्यमरात्। तस्यां हि "ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति। अर्थस्तु ब्रह्मवित् परं ब्रह्मणः सकाशादुत्कृष्टं पुरुषोत्तमं प्राप्नोतीत्यर्थः। परशब्देनात्र ब्रह्मैवोच्यते चेत्तर्हि ब्रह्मप्राप्तेर्ज्ञानात्मकत्वेन ब्रह्म प्राप्तो ब्रह्म प्राप्नोतीत्यर्थः स्यात् सत्वसङ्गतः साध्यसाधनव्याघातस्तस्मात्परशब्दस्योत्कृष्टवाचित्वेनोत्कर्षस्य सान्निध्याद् ब्रह्मणः सकाशात् परंपुरुषोत्तममित्येवार्थः। विशेषतस्तद्विवक्षमाणाऽनुभवैकगम्योऽयमानन्दो न मनोवाग्विषय इति सूचयितुमाह तदेषेत्यादि तदित्यव्ययं तद् ब्रह्मविदः परप्राप्तिलक्षणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्य ऋगेषा विदितपरब्रह्मकैरुक्ता पूर्ववाक्यविवरणमनयाक्रियतइत्यर्थः। तामेवाह सत्यमित्यादि गुहायां हृदयाकाशे परमे व्योमन् परमव्योम्नीत्यर्थः। अक्षरब्रह्मात्मके व्यापिवैकुण्ठे निहितं स्थापितमिव यो वेद स भक्तो ब्रह्मणा विपश्चिता विविधभोगचतुरेणेत्यर्थः। अत्र विविधं पश्यच्चित्त्वं विपश्चित्त्वं पृषोदरादित्वाद्यच्छन्दलोपः तेन सह सर्वान् कामानश्नुते भुङ्क्ते इत्यर्थः। अत्र तृतीयया ब्रह्मणो गौणत्वं भक्तस्य भोगे मुख्यत्वं बोध्यते। "अहं भक्तपराधीनो" "वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा" इत्यादिवाक्यादिदमनुग्रहैकलभ्यमित्यर्थः। विशेषतो भाष्यादवधेयम् ॥८४॥

नन्वविद्यायाः प्रतिबन्धकत्वे कथं परप्राप्तिरित्याशङ्कायां "विद्याविद्ये मम तनू विद्ध्युद्धव! शरीरिणाम्। मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते" इति श्रीभागवतवाक्येन मायानिर्मितत्वादविद्याया अतो मायापगमे तस्या अपि नाशो भविष्यतीत्यभिप्रायेण गीतावाक्यमाहुः मामेवेत्यादि—

"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"।
इति वाक्यात् तु भक्तानामविद्याविनिवृत्तितः ॥ ८५ ॥
अलौकिकाकारसिद्ध्यै प्रवेशो हरिणोदितः।

एवकारेणान्यप्रपत्तिर्न मायातरणकारिका " अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं किञ्चिन्नान्यदस्ति धनञ्जय " इत्यादि श्रीमुखवाक्यात् । पुरुषोत्तमस्य सर्वोत्कृष्टज्ञाने प्रपत्तिर्भवति एतादृशज्ञानस्य फलं तु " असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु । यज्ज्ञात्वा नेह भूयोऽन्यज् ज्ञातव्यमवशिष्यते" इतिवाक्यादक्षरज्ञानादिदं सर्वं सुलभमतो भक्तानां तु श्रीकृष्णप्रपत्त्यैवाविद्यानिवृत्तिरिति भावः ॥ ८५ ॥ ततः किमत आहुरलौकिकाकारसिद्धयाइति सिद्धयर्थमित्यर्थः। प्रवेश इति " यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानु विलीयते " " नद्यः प्रविष्टा इव नामरूपे " इत्यादिश्रुतिसिद्धप्रवेश इत्यर्थः । हरिणेति श्रीकृष्णेनेत्यर्थः । गीतायामिति शेषः । " विशते तदनन्तरम् ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परतन्तप " इत्यादिश्लोकैरित्यर्थः-नन्वक्षरे लये कथं पुरुषोत्तमप्राप्तिरित्याशङ्कायां पुरुषोत्तमगृहरूपत्वात्तत्र प्रवेशे प्राप्तिर्भवतीति तत्पुरुषोत्तमगृहे गीताप्रमाणमाहुः "अव्यक्त " इत्यादि--

" अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ॥ ८६ ॥"
" यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम । "
इति वाक्येन भगवद्गृहं ब्रह्म प्रकीर्तितम् ॥ ८७ ॥

अक्षरब्रह्मणोऽव्यक्तइतिनाम एतेनाव्यक्तशब्देनाक्षरब्रह्मैव ज्ञेयम् । एतेन जगतो मायिकत्वं निरस्तम् । परमां सर्वोत्कृष्टां गतिमाहुस्तत्त्वविद इति शेषः ॥ ८६ ॥ न निवर्त्तन्तइति " न स पुनरावर्त्तत " इतिश्रुतेः मम क्षराक्षरातीतपुरुषोत्तमस्य धाम गृहमित्यर्थः । अत्र भक्तानां त्वक्षरब्रह्मणः पुरुषोत्तमगृहरूपत्वेन ज्ञानं ज्ञानिनां तु पुरुषोत्तमरूपत्वेनैव । " मज्ज्ञानामशनि " रित्यादिवाक्यात् स्वभावानुसारेण " यद्यद् धिया तउरुगाय ! विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय " इति श्रीभागवतात् ॥ ८७ ॥

तर्हि अक्षरब्रह्मैव परं प्राप्यस्थानमितिचेत्तत्राहुः पुरुष इत्यादि—

"पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया । "
इत्यग्रिमेण वाक्येन गेहाधीशो निरूपितः ॥ ८८ ॥

" यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इतिवाक्यात् परः पुरुषः पुरुषोत्तमः श्रीकृष्ण-

इत्यर्थः । अत्र सिद्धान्ते जन्ममरणाद्युपाधितया क्षरो जीवः अक्षरः अन्तर्यामी अक्षरातीतः पुरुषोत्तमः "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च" इत्यादि गीतावाक्यात् । अयं विचारः श्रुतिरहस्यप्रकाशे निपुणतया निरूपितो मयेति नेह तन्यते ॥ ८८ ॥

पुरुषोत्तमलाभः कथं तत्राहुर्भक्त्येति—

भक्त्या लाभो हि निर्दिष्टो भक्तिश्चाचार्यसंश्रयात् ।
श्रीमदाचार्यचरणभजनादेव नान्यथा ॥ ८९ ॥

श्रीमदाचार्यचरणेत्यादि--अत्र क्रमस्तु पूर्वं भगवत्कृपाङ्कुरस्य स्वतः संस्कारेण भगवन्मार्गीयसङ्गादिना वा उद्बोधे मार्गेऽस्मिन्रुचिः ततोऽस्मिन्प्रवेशेच्छा, तत्राप्यङ्कुरस्य दृढत्वेऽस्मिन् मार्गे सर्वोत्तमत्वभानं प्रवेशश्च, द्वारभूतश्रीमदाचार्यकुलगुरुद्वारा शरणागतिः, ततः शुद्धः कृष्णं भजेदिति सिद्धान्तात् सपरिकरस्य स्वस्य शुद्धिरपेक्षिता सा लोके दुर्घटाऽतो "दारान् सुतान् गृहान् प्राणान् यत्परस्मै निवेदन" मितिविधिपूर्वकं सिद्धं समर्पणं, तेन च "ब्रह्मसम्बन्धकरणादि"त्यादिवाक्येन सर्वदोषनिरासोक्तेः समर्पणोत्तरं सर्वत्र दोषाभावात् प्रतीयमानानां चाभासमात्रत्वात् गङ्गाजलन्यायेन दोषाणां गौणभावाच्च सेवायामधिकारः, ततः सतां द्वारभूतश्रीगुरोर्वा सङ्गेन शिक्षया वा श्रीमदाचार्यचरणेषु भगवदभेदबुद्धिः, सर्वोत्तमस्तोत्रादिभिस्तद्भजनं, तत एतन्मार्गीयसङ्गेन भगवद्भजनस्वीयग्रन्थावलोकनश्रवणादिना प्रतिबन्धनिवृत्तौ दोषनिवृत्तिः, सेवोपयोगिगुणवृद्धिश्च ततः सेवानैरन्तर्ये सकुटुम्बस्य भगवत्प्राप्तिरिति । अन्यथेति श्रीमदाचार्यचरणशरणं विनेत्यर्थः । अत एव श्रीहरिराया आहुः "नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी । नाराधि राधिकानाथो वृथा तज्जन्मभूतले' इति वृथेत्यस्य निष्फलमित्यर्थः ॥ ८९ ॥

श्रीमदाचार्यचरणद्वाराङ्गीकृतस्य लीलाधिकारिणो यत्करोति भगवाँस्तदाहुः ब्रह्मभावमित्यादि—

ब्रह्मभावं तु सम्पाद्य परमानुग्रहाद्विभुः ।
गृहस्थितं स्वीयजीवं समुद्धरति यत्नतः ॥ ९० ॥

"यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते" इत्यादि-

श्रुत्या" नद्यः प्रविष्टा इव नामरूपे" इत्यादिश्रुत्या "विशते तदनन्तर" मिति स्मृत्या निरूपितब्रह्मणि लयो ब्रह्मभावसम्पत्तिस्तादृशं कृत्वेत्यर्थः। परमानुग्रहात् स्वीयत्वेनाङ्गीकारात्" यमेवैष वृणुते तेन लभ्य" इतिश्रुतेः । मुक्तिदानं तु सर्वेभ्यः भक्तिस्तु परमानुगृहीतस्यैव " मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग"मिति श्रीभागवतोक्तेः । अक्षरं ब्रह्म पुरुषोत्तमस्य गृहं तत्र ब्रह्मैक्यतया स्थितं स्वयं समुद्धरति तस्मात् पृथक्करोतीत्यर्थः। यत्नत इत्यनेन तस्योपरिस्नेहभरेण तद्वियोगासहिष्णुस्तस्योद्धरणे इच्छां करोतीति सिद्धम्।अत्र प्रमाणं तु व्याससूत्रं"सम्पद्याविर्भावः स्वेन शब्दा"दिति अर्थस्तु ब्रह्म सम्पाद्य स्वेन पुरुषोत्तमेनाविर्भावः क्रियते एवं कथमुच्यते तत्राह शब्दादिति "यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति शब्दात् । अत्र पुरुषोत्तमसाहित्येन सर्वकामोपभोगो जीवस्य निरूपितः सलीनस्योद्धरणं विना न सम्भवत्यस्मादुद्धरतीत्यर्थः । तथा च श्रीभागवते" ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः। ददृशुर्ब्रह्मणो लोक" मिति श्रीमदाचार्यचरणैरपि फलप्रकरणप्रारम्भे " ब्रह्मानन्दात् समुद्धृत्य भजनानन्दयोजने । लीला या युज्यते सम्यक् सा तुर्ये विनिरूप्यत" इति शुद्धपुष्टिलीलास्थजीवानां न ब्रह्मणि सायुज्यमुद्धरणं च अत एव गोपानामेव मग्नत्वमुद्धृतत्वमुक्तं न व्रजसुन्दरीणामतएव दामोदरदासादिषु लीलानुभवः स्पष्टः सङ्गच्छते । नन्वलौकिकदेहाप्तौ देहस्यानित्यत्वमायातं तद्विषयिण्या लीलाया अपीति चेत् न पुरुषोत्तमस्य लीलाया नित्यत्वं श्रुतिस्मृतिन्यायादिसिद्धम् । उपपादितं चास्मत्प्रभुचरणैर्विद्वन्मण्डने भक्तविषयिण्या लीलाया अपि नित्यत्वं " ध्रुवासोऽस्य कीरय " इति श्रुतिसिद्धम् ।यथाऽक्षरब्रह्मणः सर्वत्र व्यापकत्वमेवं भगवद्भक्तस्यालौकिकाकारस्य व्यापकत्वेन प्राकृतशरीरेऽपि तिरोहिततया वर्त्तमानमानन्दाकाररूपम् । अत एव " निराकारास्तदिच्छये" त्युक्तं श्रीमदाचार्यचरणैः । आनन्दस्यैवाकारत्वेन तत्तिरोधाने निराकारत्वं तत्प्रादुर्भावे साकारत्वमेवं तद्विषयिण्या लीलायास्तदैवाविर्भावः अतो नानित्यत्वमिति दिक् । येषान्तु सायुज्यं तेषामलौकिकाकारप्रादुर्भावार्थमेव लयः मर्यादायास्तथात्वात् येषां च न तेषां तच्छरीरएवालौकिकाकारस्याविर्भावात् । ननु लीलानुभवार्थमाविर्भावे पुरुषोत्तमेन सह भेदो जीवस्यायात इतिचेत् सत्यम् । अत्र लीलास्थानां ब्रह्मरूपत्वेन न भेद इति, वस्तुतस्तु जीवस्याभेदोऽक्षरब्रह्मणा

सह, अभेदबोधकाश्च श्रुत्यादयः अक्षरब्रह्माभेदं बोधयन्ति न पुरुषोत्तमाभेदं तथा च श्रीमदाचार्यचरणाः "पुरुषोत्तमे लयेन लीलाननुभवे नाश एव सः" अत एव श्रीमत्प्रभुचरणपौत्रैर्देवकीनन्दनैः "अक्षरेण सहैक्यं हि जीवस्य श्रुतयो जगु" रित्युक्तम् । अत एव परेणाभेदबोधको मार्गस्तामसानामिति पाद्मउत्तरखण्डउक्तं शिवेन "शृणु देवि! प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां स्मरणमात्रेण पातित्यं ज्ञानिनामपि । इति शैवपाशुपतवैशेषिकन्यायसाङ्ख्यचार्वाकबौद्धशास्त्राणि तामसानीत्युक्त्वा "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि! कलौ ब्राह्मणरूपिणा ॥ अपार्थं श्रुतिवाक्यानां दर्शितं लोकगर्हितम् । कर्मस्वरूपत्याज्यत्वं त्वत्रैव प्रतिपाद्यते ॥ सर्वकर्मपरिभ्रष्टं विकर्मत्वं तदुच्यते । परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते । ब्रह्मणस्तु परं रूपं निर्गुणं वर्ण्यते मया । सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे । वेदार्थवन्महच्छास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि जगतां नाशकारणात्" । इति नागोजीभट्टस्तु मार्कण्डेयान्तर्गतदेवीमाहात्म्यटीकायां मायावादमितिश्लोके चरणत्रयं यथास्थितं पठित्वा जगतां नाशकारणादिति पपाठेति तत्तु प्राचीनार्वाचीनसन्दर्भावलोकनेन ब्राह्मणरूपिणेति प्रतिभातीति तुच्छमेवेति । अत एव सायुज्यं लयः सहयुनक्तीति सयुक् सयुजो भावः सायुज्यमिति द्वयं ब्रह्मपरब्रह्मविषयत्वेन सङ्गतं भवतीति दिङ्मात्रमुक्तम् ॥ ९० ॥

ननूद्धारानन्तरं तस्य कथं स्थितिस्तत्राहुरुद्धृताविति—

> उद्धृतौ परमक्लेशो विरहानलसम्भवः ॥
> यदा देहादिनाशाय समर्थो जायते तदा ॥ ९१ ॥
> निजं श्रीमत्कृष्णचन्द्रः स्वाधिकारानुसारतः ।
> परमानन्दलीलां तामनुभावयति प्रभुः ॥ ९२ ॥

भक्तस्य ब्रह्मानन्दादुद्धृतौ विरहानलाद्वियोगाग्नेः सकाशात् सम्भवउत्पत्तिर्यस्य एतादृशो यः परमक्लेशो देहादिनाशाय यदा समर्थो जायते तदेत्यन्वयः । यद्वा परमक्लेशः विरहानलसम्भवस्ताप इति शेषः तदा तस्मिन् काले ॥९१॥ निजं जीवं परमकारुणिकः श्रीमत्कृष्णचन्द्रो यथाधिकारं परमानन्दलीलामनुभावयतीत्यर्थः । गणितानन्दव्यावृत्त्यर्थं

परमेत्यानन्दस्य विशेषणम् । तामनुग्रहैकलभ्याम् । प्रभुः समर्थः।अनुभवे भक्तस्य प्राधान्यं तदुदितं प्राक्। "रसो वै सः रस ँ ह्येवायं लब्ध्वानन्दी भवति को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती" ति श्रुतेः । अत्र रसात्मकभगवत्स्वरूपलाभे सति आनन्दी भवतीत्यानन्दवत्त्वमुक्त्वा जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते । मरणहेतूपस्थित्यभावे जीवनहेतुत्वं न वदेत् अतो रसस्य संयोगविप्रयोगभावत्वेन पूर्णतया विरहतापस्योपमर्दकत्वेन प्राणस्थितिरपि न स्यात् यद्येष स्फुरद्रूपः आनन्द आकाशो भगवान् न स्यात् को वा जीवयेन्न कोऽपि इत्यर्थः । एतादृशापन्निवारणं भगवत एवेति ज्ञापनाय श्रुतौ हिशब्दः तादृशस्य जीवनमावश्यकमिति ज्ञापनाय एवकारः । तापात्मकस्यानन्दरूपत्वायानन्दपदं तदनन्तरं प्रकटीभूय तदन्यः को वा दर्शनस्पर्शनाश्लेषणभाषणादिभिः स्वरूपानन्ददानेनान्यात् पूर्वतापनिवृत्तिपूर्वकमानन्दपूर्णं कुर्यादित्यर्थः । अन्यथाऽन्यात् प्राण्यादित्युभयत्रानतेः सत्त्वात् पौनरुक्त्यं स्यादिति श्रीमद्भाष्यकारचरणैः " स्पष्टो ह्येकेषाम् " इति सूत्रे " एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतन्निवर्त्तनलक्षणोऽर्थः स्पष्टः पठ्यते " इत्युक्तोक्तमिति विस्तरावलोकनेच्छुभिस्ततोऽवधेयम् ।दुःखस्य परमफलरूपत्वं तु भाष्यविद्वन्मण्डनादौ निरूपितम् मयाऽपि श्रुतिरहस्यप्रकाशे प्राकाशि ॥ ९२ ॥

मुख्यकारणमाहुः इति श्रीवल्लभाचार्येत्यादि—

इति श्रीवल्लभाचार्यचरणाब्जकृपाभरात् ।
प्राप्यते नान्यथा चैतद् ब्रह्मादीनां सुदुर्लभम् ॥ ९३ ॥

" आचार्यवान् पुरुषो वेद " इति श्रुतेः " कृष्णाधरामृतास्वादसिद्धिरत्र न संशयः " इतिवाक्यात् " सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः । रासलीलैकतात्पर्यः कृपयैतत्कथाप्रदः " इतिवाक्याच्च । ब्रह्मादीनां सुदुर्लभमिति " न स्त्रियो व्रजसुन्दर्यः पुत्र ! ताः श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् ॥ षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा॥तथाऽपि न मया प्राप्तास्तासां वै पादरेणव" इति बृहद्वामनपुराणवाक्यात् । लीलाप्रधानभक्तचरणरेणुरपि दुर्लभस्तदा श्रीकृष्णाधरामृतास्वादनायतिदुर्लभतरमिति भावः ॥ ९३ ॥

ज्ञानिनां मुक्तिमाहुर्ये त्विति—

ये तु ज्ञानैकसन्निष्ठास्तेषां तु लय एव हि ॥
भक्तानामेव भवति लीलास्वादोऽतिदुर्लभः ॥ ९४ ॥

"ऋते ज्ञानान्न मुक्तिः" "ज्ञानादेव च कैवल्यम्" इतिश्रुतेः लय एव हीति "न स पुनरावर्त्तते" इतिश्रुतेः । ननु सिद्धान्तेऽक्षरब्रह्मणा सहैक्ये भगवतोद्धारः क्रियते इति "न स" इति श्रुतिविरोध इतिचेन्न । अनया संसारावर्त्तनं निषिध्यते न तु ब्रह्मातीतपुरुषोत्तमप्राप्तिः । "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ! मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते" इति भगवद्वाक्यात् विशेषतो निरूपणं तु भाष्य-विद्वन्मण्डनादौ । यत्राक्षरप्राप्तावपि न पुनरावर्त्तते तत्र तदतीतप्राप्तौ तत्सम्भावनाऽपि नेति । भक्तानामेवेति "मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने !" इति श्रीभागवतवाक्यान्नारायणभक्तस्यातिदौर्लभ्यम् । "नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत ! सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥ ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् । वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत्" इत्याद्युक्त्वा "आनन्दमात्रमितियद् वदन्तीह पुराविदः॥ तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः" इत्यादिबृहद्वामनपुराणे श्रुतिप्रार्थनावाक्यात् तत्परस्य पुरुषोत्तमस्य भक्तानां श्रैष्ठ्ये किमु वाच्यम् । तत्र ताभिःस्तुतो भगवानक्षरब्रह्मस्थं श्रीवृन्दावनश्रीयमुनाश्रीगिरिगोवर्द्धनादिलोकं तत्रस्थितश्रीगोपिकाकदम्बस्थितस्वस्वरूपं च दर्शयित्वा भगवानाह "ब्रूत किं करवाणि वः" इति ततः श्रुतयः नित्यसिद्धगोपिकावन्मनोरथं याचितवत्यः ततः "दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः । मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति" इत्याहेति लीलास्वादोऽनुग्रहैकलभ्योऽतोऽतिदुर्लभो लीलास्वादो भक्तानामेव भवतीत्यर्थः । तत्रैव पुराणे "स्त्रियो वा पुरुषा वाऽपि भक्तिभावेन केशवम् । हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशयः" इति वाक्यात् एतत्पुराणवाक्यानि विद्वन्मण्डने प्रभुचरणैर्निरूपितानि ॥ ९४ ॥

एवं निरूप्य समाप्तिं प्रतिजानते इति श्रीश्रीमदाचार्येत्यादि—

इति श्रीश्रीमदाचार्यचरणाब्जप्रसादतः ।
प्रोक्तं गिरिधरेणेदं पश्यन्तु हरिभावुकाः ॥ ९५ ॥

अत्र श्रीद्वयोपादानमुभयभागस्थितस्वामिनीवाचकं तेन लीलास्थ-पुरुषोत्तमत्वमत एषां चरणाब्जप्रसादेऽयं रसः सदाऽऽस्वाद्यो भवतीति बोध्यते ॥ ९५ ॥

एतद्ग्रन्थावलोकनकर्तॄणां फलमाहुः सूर्योदये इत्यादि—

सूर्योदये शीतमपैति सर्वं मार्गावलोको जलजप्रकाशः ।
तमोनिवृत्तिर्द्विजकर्मवृत्तिस्तथैव मार्त्तण्डनिबन्धबोधे ॥ ९६ ॥

इति श्रीमन्मुकुन्दरायसहजमाधुरीपरमानिर्वचनीयसरसव-
दनतामरससुधाह्रदावगाहिश्रीमदाचार्यकृपापार-
सारश्रीमत्प्रभुचरणात्मजमहाराजश्रीयदुना-
थकुलोद्भवगोस्वामिश्रीगोपालात्मज-
नुषा श्रीगिरिधरेण विरचितः शुद्धा-
द्वैतमार्त्तण्डः समाप्तिमफाणीत् ।

शीतस्य जाड्यत्वेन जाड्यं गच्छति, निजाचार्यप्रकटितमार्गज्ञानं, भक्तहृदयाब्जप्रकाशः, तमोऽज्ञानं तस्य निवृत्तिः, द्विजस्य ब्राह्मणादेः सूर्योदये सन्ध्यावन्दनादिकर्मसु यथा वृत्तिः प्रवृत्तिः तथा ब्रह्मसम्बन्धिनः "कर्म्माण्येकं तस्य देवस्य सेवा" इतिवचनात् सेवारूपकर्मणि प्रवृत्तिः, आत्मनिवेदिनामेव भगवत्सेवायामधिकारः "आत्मनिवेदिनो हि भगवत्सेवार्हा नेतरे गायत्र्युपदेशजसंस्कारव"दिति प्रभुचरणाः । तथाच गायत्र्युपदेशेन द्विजत्वमेवमात्मनिवेदनेनात्र भगवत्सेवाधिकारत्वसंपादकद्विजत्वं यथा जन्म ब्राह्मणकुले तदनुगायत्र्युपदेशेन कर्माधिकार एवं शरणमन्त्रोपदेशो वैष्णवत्वं तदन्वात्मनिवेदने सेवाधिकार इति भावः । निबन्धो ग्रन्थः ॥ ९६ ॥

इति श्रीयदुनाथानां कुलचूडामणेर्गुरोः ।
श्रीमद्गिरिधरस्याङ्घ्रिसरोरुहपरागलिट् ॥ १ ॥

रामकृष्णः स्वबोधाय व्यरचत्तत्कृपालवात् ।
शुद्धाद्वैताख्यसिद्धान्तमार्त्तण्डस्य प्रकाशकम् ॥ २ ॥
यदिदं सदसद्वापि प्रोक्तं धाष्टर्यान्मयाऽत्र हि ।
तत्र श्रीवल्लभाचार्याः क्षपयन्तु निजेश्वराः ॥ ३ ॥

इति श्रीमदखण्डपण्डिताडम्बरखण्डनप्रचण्डपचनमरीचिश्रीमदाचार्यात्मजश्रीमत्प्रभुचरणात्मजश्रीमहाराजयदुनाथकुलकमलविकासककरश्रीमद्गोपालात्मजश्रीमद्गिरिधरचरणकमलमकरन्दमधुपायमाननेतोपनामकरामकृष्णभट्टरचितशुद्धाद्वैतमार्त्तण्डप्रकाशः समाप्तिमगमत् ॥

श्रीगोपीजनवल्लभाय नमः ।

# अथ शुद्धाद्वैतपरिष्कारः ॥

अथ शुद्धाद्वैतपरिष्कृतिरियं लिख्यते ॥
शुद्धाद्वैतविचारेण मायावादनिवर्त्तकान् ।
श्रीमदाचार्यचरणान् प्रणमामि मुहुर्मुहुः ॥ १ ॥

अथ शुद्धाद्वैतस्य किं लक्षणमितिचेत् इतरसम्बन्धानवच्छिन्नकार्यकारणादिरूपद्वित्वप्रकारकज्ञानप्रतियोगिताकाभाववत्त्वमिति गृहाण । अत्र हि द्वित्वप्रकारकज्ञानप्रतियोगिताकाभाववत्त्वमित्यनेनैवेतरसम्बन्धानवच्छिन्नत्वप्रतीतेरनवच्छिन्नान्तविशेषणस्य किं प्रयोजनमिति चेत् सत्यं कार्यकारणादिद्वित्वप्रकारकपदार्थस्य मायिकत्वाभावाय तद्विशेषणम् । शङ्कराचार्याणां मते मायाविद्योपाध्यवच्छिन्नेश्वरजीवरूपकारणकार्ययोरशुद्धत्वात् अन्यथा तेषां मते कार्यकारणयोः शुद्धत्वे द्वैतापत्तिः । अतएव स्वरूपलक्षणे सत्यादिपदलक्ष्यमेव ब्रह्म सर्वत्रैव हि वाक्यार्थो लक्ष्यएवेति च स्थित इत्युक्तेः । तत्रापि वदामः लक्षणायाः शक्यसम्बन्धरूपत्वात् तस्य च द्विनिष्ठत्वात् ब्रह्मणि सत्त्वेन वान्ताशित्वापातः । अथ च सम्बन्धस्यापि मायिकत्वमिति चेत्

लक्ष्यत्वरूपधर्मवत्त्वेन दोषस्तदवस्थः। लक्ष्यत्वमपि तथैव मायिकं चेत् भद्रं लक्षणावैयर्थ्यम्। किञ्च लक्ष्यस्य तीरस्यागङ्गात्ववत् सत्यादिलक्ष्यस्यासत्यत्वादित्वापातः। उपाधिवादस्य च श्रीमदाचार्यचरणादिभिः खण्डितत्वान्नेह तन्यते। अथ च "सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" इति न्यायेन विशेषणस्येतरभेदकत्वेन मायासम्बन्धराहित्याभावादेव व्यावर्त्याभावादपार्थमिदं विशेषणमिति चेत् दत्तोत्तरत्वात् बोधाय निरूपणयित्वेनेतरमतजन्यज्ञानस्य निरसनीयत्वात्। किञ्च सन्ध्याधिकरणानुरोधेन स्वाप्निकसृष्टेर्मायिकत्वेन तद्व्यावृत्त्यर्थं वा तत्। स्वाप्नसृष्टेरवास्तविकत्वेन अस्याः सृष्टेश्च वास्तविकत्वेन भेदो "वैधर्म्याच्च न स्वप्नादिव"दिति सूत्रादिभिर्व्यासचरणैरेव प्रतिपादितः। इतरसम्बन्धविशेषणं तु ब्रह्मणो धर्मधर्मिभावसम्बन्धावच्छिन्नतया तस्यापि निरासे शङ्करमतप्रवेशवारणाय। तर्हि धर्मधर्मिभावसम्बन्धाङ्गीकारे द्वित्वप्रकारकज्ञानप्रतियोगिताकाभावाद्व्याप्तिरिति चेत् धर्मधर्मिभावस्याभिन्नत्वस्य "प्रकाशाश्रयवद्वा तेजस्त्वात्"इत्यादिसूत्रैर्निर्णीतत्वात्। "पराऽस्यशक्ति"रित्यादिष्वभेदएव षष्ठ्यङ्गीकारात्। एतेन भेदाभेदवादिनौ निम्बार्कभास्कराचार्यौ प्रत्युक्तौ॥ तत्राद्यस्य वास्तविकभेदाभेदत्वेन मध्वाचार्यस्येव भेदस्य वास्तविकतया द्वित्वप्रकारकेत्यादिना निरस्तत्वात् द्वितीयस्य भेदाभेदेन भेदस्यौपाधिकत्वेनेतरसम्बन्धेत्यादिना व्यावर्त्तितत्वात्। तर्हि अवच्छिन्नान्तमेव तदिति चेत् शङ्करमतापत्तिरतः कार्यादीति। तर्हि रामानुजाचार्यमतेऽपि मायासम्बन्धाभाववत्कार्यकारणयोरद्वैततया तन्मतप्रवेश इति चेच्छृणु तन्मते हि चिदचिद्विशिष्टस्य सूक्ष्मस्य स्थूलस्य कारणस्य कार्यस्य च सत्त्वेन स्वमते "आत्मैवेदमग्र आसी"दित्यादिश्रुत्या अचितः कारणावस्थायां निषेधात् केवलात्मनः कारणतया ततो वैलक्षण्यं कार्यावस्थायामपि तेषां मते परस्परभेदस्य वास्तविकत्वेन स्वमतेऽभेदस्य वास्तविकत्वेनापि वैलक्षण्यम्। न च घटपटादीनामभेदो न सम्भवतीति वाच्यम्। सर्वेषां ब्रह्मोपादानस्यैकत्वेन तस्यैवावस्थान्तरत्वेन चाभेदात्। यथा सुप्तउत्थितउपविष्टे च पुरुषेऽवस्थाभेदेऽपि न पुरुषभेदः। किञ्चेतरसम्बन्धानवच्छिन्नत्वेनाचितो वास्तविकभिन्नचितश्च निरासेन न तत्रातिव्याप्तिः। किञ्च विशिष्टाद्वैतमित्यस्य विशेषणविशिष्टत्वेन विशेषणस्य चेतरव्यावर्तकत्वेन सम्भवोऽपेक्षितोऽत्र व्यावर्त्याभावतया वैशिष्ट्यकथनं नोपपद्यत-

इति । एतेन शैवोऽपि दत्तोत्तरः । भिक्षुस्तु अविभागाद्वैतवादमवलम्ब्यौपाधिककर्तृत्वादिकमङ्गीचकार तदपीतरसम्बन्धावच्छिन्नाभावत्वेन निरस्तम् । द्वित्वप्रकारकाद्यभावत्वान्तेन मध्वाचार्यमतस्य निरासः । लीलास्थभावस्य बाधाभावाय कार्यकारणादिरूपमिति ज्ञानस्य विशेषणम् । द्वित्वप्रकारकप्रतियोगिताकाभावस्य मायावादमतेऽपीष्टत्वात् तन्निवारणाय ज्ञानस्येति प्रतियोगिनि विशेषणमिति सुष्ठु ॥ अत्र शुद्धाद्वैतपदे कोऽसौ समास इति चेत् शुद्धं च तदद्वैतं चेति कर्मधारयः। अत्र इतरसम्बन्धानवच्छिन्नत्वे सति इत्येवं योज्यम् । उक्तलक्षणं तु शुद्धयोः कार्यकारणयोरिति षष्ठीतत्पुरुषपक्षे बोध्यम् । अत्र नरसिंहतापिन्यां योनित्वं ब्रह्मणः समर्थयित्वा "सर्वं सर्वमयं सर्वे जीवाः सर्वमया सर्वावस्थासु तथाऽप्यल्पा" इत्याद्युक्त्वा "सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगम्यते" इति वाक्यं पठितम् । अग्रे च "सर्वमत एव शुद्धोऽबाध्यस्वरूपः सुखरूप आत्मे"ति निरूपितम्। "सर्वं खल्विदं ब्रह्मे"त्यादिश्रुतिषु शुद्धाद्वैतं स्पष्टमेव प्रतीयतइति बोध्यम् । विस्तरस्तु मत्कृतशुद्धाद्वैतमार्तण्डप्रकाशे बोध्यः । श्रीमद्गिरिवराधीशपादाम्बुजपरागभृत् ॥ व्यलिखद्रामकृष्णोऽसौ शुद्धाद्वैतपरिष्कृतिम् ॥ ॥ १ ॥ इति श्रीरामकृष्णभट्टविरचिता शुद्धाद्वैतपरिष्कृतिः समाप्ता ॥

इति शुद्धाद्वैतपरिष्कारः समाप्तः ।

---

१ विशिष्टाद्वैतवादिरामानुजमतस्य चौरत्वात्

# शुद्धाद्वैतमार्त्तण्डः

ઘણા લોકો રૂબરૂમાં તેમ જ પત્રદ્વારા શુદ્ધાદ્વૈતનું સ્વરૂપ જાણવાની ઇચ્છા રાખી તે વિષે વિવેચન કરી સમજાવવાનું જણાવે છે, પણ વેદ, શ્રીમદ્દભગવદ્દગીતા, વ્યાસસૂત્ર અને શ્રીમદ્દભાગવત વિગેરેમાં જેનું વિસ્તારથી નિરૂપણ કરેલું છે, તેની સમજણ રૂબરૂમાં એકાદ વખત કહેવાથી કે પત્રમાં લખવાથી બરાબર થઇ શકે તેવી નહિ હોવાથી તે બાબતનો ગ્રંથ પ્રસિદ્ધ કરવાનો સભાનો વિચાર થતાં, કાશી-વાળા ગોસ્વામી શ્રીગિરિધરજી મહારાજે, સંક્ષેપમાં શુદ્ધાદ્વૈતનું સ્વરૂપ વૈષ્ણવોના જાણવામાં આવવા માટે शुद्धाद्वैतमार्तण्ड નામનો ગ્રંથ શ્લોકાત્મક કરેલો છે; તેમાં અત્યંત સંક્ષેપથી સર્વ બાબતો લખેલી હોવાથી, સાધારણ માણસો સારી રીતે સમજી શકશે નહિ, એમ ધારી, તે ઉપર તેમના આશ્રિત રામકૃષ્ણભટ્ટજીએ પ્રકાશ નામનો ગ્રન્થ કરેલો છે, તે ગ્રંથ અહિં દાખલ કરવાનું યોગ્ય જણાતાં તે મૂળ તથા પ્રકાશમાં જે જે સ્થળે સંક્ષિપ્ત લેખ છે, તે તે સ્થળે विद्वन्मण्डन વગેરે બીજા ગ્રંથોનો અભિપ્રાય લઈ, સુધારા તથા વધારા સાથે તે ગ્રંથ અહિં દાખલ કરવામાં આવે છે; તેમાં શ્રી-ગિરિધરજીમહારાજકૃત મૂળગ્રંથની કારિકાઓ દાખલ કરી, તેનો ગૂજરાતીમાં શબ્દાર્થ લખી ટીકામાં પ્રકાશ તથા બીજા ગ્રંથોનો અભિપ્રાય લખી, ગૂજરાતીમાં વિવેચન લખવામાં આવશે; માટે સંસ્કૃત ટીકા સાથે આ ગૂજરાતી ટીકા મેળવતાં કમી જાસ્તી જોવામાં આવે ત્યાં સાધારણ જનના બોધ માટે સુધારો વધારો કરેલ છે એમ સમજવું.

શ્રીગિરિધરજીમહારાજ પ્રથમ બે શ્લોકવડે મંગળાચરણ કરીને શુદ્ધાદ્વૈત-માર્ત્તણ્ડ નામનો ગ્રંથ કરવાની પ્રતિજ્ઞા કરે છે.

मूलम् । श्रीमदाचार्यचरणौ श्रीविट्ठलपदाम्बुजे ।
श्रीमतां यदुनाथानां श्रीमद्गिरिधरः सुधीः ॥ १ ॥
चरणाम्बुजकिञ्जल्कपरागान्प्रणिपत्य तम् ।
शुद्धाद्वैतविचारार्कं तनुते सुधियां मुदे ॥ २ ॥

શબ્દાર્થ—શ્રીમદાચાર્યજીનાં ચરણારવિંદ, શ્રીગુસાંઇજી શ્રીવિઠ્ઠલનાથજીનાં ચરણકમલ અને શોભાયુક્ત શ્રીયદુનાથજીનાં ચરણકમલના તંતુના પરાગને પ્રણી-પાત કરીને સારી બુદ્ધિવાળા શ્રીગિરિધરજી સારી બુદ્ધિવાળાના હર્ષને માટે શુદ્ધાદ્વૈત વિચારના સૂર્યને વિસ્તારે છે.

ટીકા—શ્રીમદાચાર્યજી શ્રીપૂર્ણપુરુષોત્તમના મુખારવિન્દરૂપ હોવાથી ભગ-વાનની વાણીરૂપ વેદનું તાત્પર્ય શ્રીઆચાર્યજીની કૃપાવડે જ જણાય; તેટલા માટે પ્રથમ તેમનાં ચરણને નમન કર્યું છે. ચરણ ઉદ્ધારકરનાર હોવાથી ચરણને નમન

કરેલ છે. ચરણ ઉદ્ધારકરનાર છે એ હકીકત શ્રીભાગવતદશમસ્કંધમાં ગર્ભસ્તુતિમાં બ્રહ્માજીયેં કહેલ છે કેઃ–

स्वयं समुत्तीर्य सुदुस्तरं द्युमन्! भवार्णवं भीममदभ्रसौहृदाः ।
भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥

અર્થ–હે પ્રકાશયુક્ત ભગવન્! આપના ભક્તો, કાયથી તરી શકાય નહિં એવા ભયંકર સંસારરૂપ સમુદ્રને ભક્તિરૂપ આપનાં ચરણારવિંદવડે પોતે સારી રીતે ઉતરીને સર્વ ઉપર ઘણા સૌહૃદવાળા હોવાથી આપનાં ચરણારવિંદરૂપ ભક્તિમાર્ગાત્મકનાવને તેઓ અહિં પૃથ્વી ઉપર રાખીને તેઓ પરમપદને પ્રાપ્ત થયા છે. ભક્તિમાર્ગરૂપ નાવ અહિં રાખેલું હોવાથી તેનાવમાં બેસનાર વગરમહેનતે સંસારરૂપસમુદ્રને તરશે કેમકે તેમાર્ગને પ્રવર્ત્તાવનાર ઉપર આપનો અનુગ્રહ છે તેથી તેમના પ્રવર્ત્તાવેલા માર્ગ ઉપર આપને પક્ષપાત રહે છે. એમ કહ્યું છે ત્યાં ચરણારવિંદરૂપ ભક્તિમાર્ગ ઉદ્ધારકરનાર છે એમ કહીને ચરણારવિંદને ઉદ્ધારકપણું બતાવ્યું છે; માટે પોતાનો ઉદ્ધાર પણ આચરણારવિંદથીજ છે એમ સૂચવ્યું છે. શ્રીગુસાંઈજીનું નામ શ્રીવિઠ્ઠલનાથજી છે તેનો અર્થ એવો થાય છે કે જ્ઞાનરહિતજીવોનો દાસપણાંથી અંગીકાર કરે છે એવા કરુણામય છે. તેમના ચરણકમલને નમનકરવાનું કહ્યું છે તેનો અભિપ્રાય એવો છે કે ભક્તિમાર્ગના પ્રવર્તક છે. ભક્તિવાળાઓના તાપને હરનાર છે અને ભક્તરૂપ ભ્રમરો તેમનું સેવન કરે છે. તેમજ પ્રેમના પૂરથી જેનું મન ભરેલું હોય તેના મનમાં તેમનો પ્રાદુર્ભાવ થાય છે એમ પણ સૂચવ્યું છે. શ્રીયદુનાથજી (પોતાના પિતાજી)નાં ચરણકમલના કિંજલ્કના પરાગને નમન કરવાનો અભિપ્રાય એવો છે કે યદુરાજા પુષ્ટભક્ત હતા તેના નાથ હોવાથી પુષ્ટિભક્તોને ઇષ્ટ ફળ આપવાનું સૂચવ્યું છે (૧) તેમનાં ચરણારવિંદના પરાગને નમન કરવાનો અભિપ્રાય એવો છે કે જેમ દર્પણ મલિન હોય તેને રજ લગાવી નિર્મળ કરે તો તેમાં મુખ સારી રીતે દેખાય તેમ ચરણકમલનાં પરાગવડે મનરૂપ દર્પણ નિર્મળ થાય તો તેની અંદર સિદ્ધાંતસ્વરૂપની સારી સ્ફુરણા થાય. સાષ્ટાંગ પ્રણામને પ્રણિપાત કહે છે. તેવી રીતે અહિં પ્રણિપાત કરવાનું કહેવાનો અભિપ્રાય એવો છે કે શ્રીભગવાને ગીતાજીમાં કહેલ છે કેઃ–

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥

અર્થ–તત્ત્વને જોનાર જ્ઞાનિયો, પ્રણિપાતવડે, પરિપ્રશ્નવડે અને સેવાવડે તને જ્ઞાનનો ઉપદેશ કરશે તે તું જાણ. એમ કહ્યું છે. ત્યાં જ્ઞાનનો ઉપદેશ મળવાનું સાધન પ્રણિપાત લખેલ છે તેથી અહિં પ્રણિપાત કહેલ છે. શુદ્ધાદ્વૈતમાર્ત્તંડનો વિસ્તાર કરવાનું કહેલ છે તેનો અભિપ્રાય એવો છે કે અસલ જે બાબત શાસ્ત્રમાં સિદ્ધ છે તેનો વિસ્તાર કરું છું. કાંઇ કપોલકલ્પિત આ બાબત નથી. સારીબુદ્ધિવાળાના હર્ષમાટે કરવાનું કહ્યું છે તેનો અભિપ્રાય એવો છે કે જે, ભગવાનનીજ

એકશરણે હોય તે સારી બુદ્ધિવાળા કહેવાય છે. તેવાઓને આસિદ્ધાંતના અવ-
લોકનથી આનંદ થશે. (૨)

એવી રીતે ગ્રંથ કરવાની પ્રતિજ્ઞા કરીને દ્વૈતનું સ્વરૂપ જાણવામાં આવે ત્યારપછી અદ્વૈતસ્વરૂપ જણાય તેસારૂ પ્રથમ દ્વૈતપદાર્થનું સ્વરૂપ બતાવી અ-દ્વૈતનું નિરૂપણ કરે છે.

मूलम् । द्विधा ज्ञानं तु यद्यत्स्यान्नामरूपात्मना मुहुः ।
ईशजीवात्मना वाऽपि कार्यकारणतोऽथवा ॥ ३ ॥
द्वीतं तदेव द्वैतं स्यादद्वैतं तु ततोऽन्यथा ।
सर्वं खल्विदं ब्रह्म तज्जलानिति पठ्यते ॥ ४ ॥

શબ્દાર્થ—નામ તથા રૂપાત્મકથી, ઇશ્વર તથા જીવરૂપથી અને કાર્ય તથા કારણથી જે જે બેપ્રકારનું જ્ઞાન થાય તે દ્વીત કહેવાય છે દ્વીતતેજદ્વૈત અને તેથી ઉલટું તે અદ્વૈત કહેવાય છે. તે વેદમાં सर्वं खल्विदं ब्रह्म तज्जलान् (ઉત્પત્તિ લય અને સ્થિતિ આજગતની બ્રહ્મમાંજ છે તેથી આ દેખાતું નામરૂપાત્મક સર્વ જગત્ બ્રહ્મ છે) એમ કહેલ છે.

ટીકા—બેપ્રકારનું જ્ઞાન થાય તે દ્વૈત કહેવાય છે. દ્વૈત શબ્દનો અર્થ એવી રીતે થાય છે કે બેપ્રકારે થનારું જ્ઞાન હોય તે દ્વીત કહેવાય અને દ્વીત તેજ દ્વૈત કહેવાય છે. જેમ કે ઈશ્વર અને જીવ, નામ અને રૂપ તેમજ કાર્ય અને કારણ એવી રીતના બેપ્રકારનું જે જ્ઞાન થાય તે દ્વૈત કહેવાય છે. છાંદોગ્ય ઉપનિષદના છઠ્ઠા પ્રપાઠકમાં नामरूपे व्याकरवाणि (નામ અને રૂપનો વિસ્તાર કરું) એમ લખેલ છે તેથી નામ અને રૂપ એવો વ્યવહાર ભગવાને કરેલો હોવાથી તેને ભગવદ્રૂપ પણું છે; માટે अस्ति (છે) भाति, (પ્રકાશે છે) प्रिय, (આનંદ રૂપ) रूप (આ-કાર) અને नाम (ઘટ, પટ એવાં નામ) એ પાંચમાંથી પ્રથમનાં ત્રણ (અસ્તિ, ભાતિ અને પ્રિય) બ્રહ્મરૂપ છે અને રૂપ તથા નામ માયારૂપ છે એમ માયાવા-દિઓ કહે છે તેનો નિરાસ થયો; કેમકે છાંદોગ્યની શ્રુતિમાં નામ તથા રૂપ ભગ-વાને કરેલાં હોવાથી ભગવદ્રૂપ છે એમ લખેલું છે તો ભગવદ્રૂપ હોય તે માયારૂપ કહેવાયજ નહિં. કેટલાએક નામ તથા રૂપ જગદ્રૂપ છે એમ કહે છે તે વધારે પ્રતિકૂલ નથી; કેમકે નામ અને રૂપને જગદ્રૂપપણું છે, જગત્ કાર્ય છે તેનું કારણ બ્રહ્મ છે, અને મૃતિકારૂપ કારણ તથા ઘટરૂપ કાર્યને જેમ ભેદ નથી તેમ બ્રહ્મરૂપ કારણ અને જગદ્રૂપ કાર્યને ભેદ નથી; તેથીજ નિબંધના પ્રા-રંભમાં શ્રીઆચાર્યજીમહાપ્રભુજીયેં આજ્ઞા કરી છે કે:—

तस्मै नमो भगवते कृष्णायाद्भुतकर्मणे ।
रूपनामविभेदेन जगत् क्रीडति यो यतः ॥

અર્થ—રૂપ અને નામ એવા વિશેષભેદવડે જે જગદ્રૂપ છે, રૂપ અને

નામ એવા વિશેષભેદવડે જે ક્રીડા કરે છે અને રૂપ તથા નામ એવા વિશેષભેદવડે જેનાથી જગત્ થાય છે તે અદ્ભુતકર્મવાળા ભગવાન્શ્રીકૃષ્ણને નમન કરૂં છું.

શંકા—નામ અને રૂપને બ્રહ્મરૂપપણું માનશો ત્યારે નામરૂપવાળુ બ્રહ્મ થવાથી સધર્મક (સગુણ) બ્રહ્મ થશે, માટે માયિકપણું નામરૂપને માનવું તે ઉત્તમ છે.

ઉત્તર—અસ્તિ, ભાતિ અને પ્રિય, એ ત્રણ ધર્મને બ્રહ્મરૂપપણું માનવાથી પણ સધર્મપણું તો બ્રહ્મને થશેજ; માટે જેમ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति (પ્રકાશિતથનાર તેઆત્માની પાછળજ સર્વ પ્રકાશિત થાય છે અને તેની કાંતિવડે આ સર્વ જગત્ પ્રકાશિત થાય છે) એશ્રુતિમાં સર્વને પ્રકાશ-કરનાર આત્મા છે એમ કહ્યું છે અને एष ह्येवानंदयाति (આ આત્માજ સર્વને આનંદરૂપ કરે છે) એશ્રુતિમાં સર્વને આનંદઆપનાર આત્મા છે. એમ કહ્યું છે તેવી રીતે नामरूपे व्याकरवाणि (નામ તથા રૂપનો હું વિસ્તાર કરું) એશ્રુતિમાં નામરૂપનો પ્રકાશકરનાર બ્રહ્મ છે એમ કહ્યું છે તેથી નામ તથા રૂપને માયિક-પણું નથી. અર્થાત્ નામ તથા રૂપ બ્રહ્મથી જૂદાં છે એવું જ્ઞાનજ માયિક છે પણ નામ તથા રૂપ માયિક નથી. એવીજ રીતે ઈશ્વર તથા જીવનો ભેદ અને કાર્ય તથા કારણનો ભેદ છે એમ સમજવું તે માયિક જ્ઞાન કહેવાય છે.

બેપ્રકારનું જ્ઞાન તે દ્વીત કહેવાય છે દ્વીત તેજ દ્વૈત કહેવાય છે. દ્વૈતથી ઉલટું તે અદ્વૈત કહેવાય છે. છાંદોગ્યઉપનિષદના ત્રીજા પ્રપાઠકમાં કહ્યું છે કેઃ—

सर्वं खल्विदं ब्रह्म तज्जलान् ।

અર્થ—આ દેખાતું સર્વ જગત્ બ્રહ્મરૂપ છે; કેમકે બ્રહ્મથી ઉત્પન્ન થાય છે, બ્રહ્મમાં લીન થાય છે અને બ્રહ્મમાંજ તેની સ્થિતિ છે; અર્થાત્ ઉત્પત્તિ, સ્થિતિ અને લયની અવસ્થામાં આ જગત્ બ્રહ્મમાંજ રહે છે તેથી નામરૂપસહિત સર્વ જગત્ બ્રહ્મરૂપજ છે. (૪)

ઉપર છાંદોગ્ય ઉપનિષદની શ્રુતિ પ્રમાણમાં આપી તેનો અર્થ કહે છેઃ—

मूलम् । सर्वं ब्रह्मात्मकं विश्वमिदमा बोध्यते पुरः ।
सर्वशब्देन यावद्धि दृष्टश्रुतमदो जगत् ॥ ५ ॥
बोध्यते तेन सर्वं हि ब्रह्मरूपं सनातनम् ।
कार्यस्य ब्रह्मरूपस्य ब्रह्मैव स्याच्च कारणम् ॥ ६ ॥

શબ્દાર્થ=શ્રુતિમાં इदम् (આ) શબ્દ કહેવાથી આગળ દેખાતું સર્વ જગત્ બતાવે છે, અને સર્વશબ્દથી જેટલું જોયેલું તથા સાંભળેલું જગત્ બતાવે છે. તેથી સર્વદા રહેલું સર્વ જગત્ બ્રહ્મરૂપ છે એમ બતાવાય છે. બ્રહ્મરૂપ કાર્યનું કારણ બ્રહ્મજ હોય.

ટીકા—सर्वं खल्विदं ब्रह्म (આ સર્વ નિશ્ચય બ્રહ્મ છે) એ શ્રુતિમાં इदम् શબ્દ કહેલ છે તે પ્રત્યક્ષને કહેનાર હોવાથી પ્રત્યક્ષ દેખાતું સર્વ જગત્ બ્રહ્મ છે એમ

બોધ કરાય છે અને સર્વ (બધું) શબ્દ કહેલ છે તે જોયેલા તથા સાંભળેલા તમામને કહેનાર હોવાથી જોયેલું તથા સાંભળેલું તમામ બ્રહ્મરૂપ છે એમ બોધ કરાય છે, તેથી સર્વ જગત્ સનાતન બ્રહ્મરૂપ છે એમ બોધ થાય છે. તેબાબત છાંદોગ્યઉપનિષદના છઠ્ઠા પ્રપાઠકમાં શ્વેતકેતુના આખ્યાનમાં તેના પિતા ઉદ્દાલકે બોધ કરેલો છે કેઃ–

सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।
तत्सत्यम् यदिदं किंच तत्सत्यमित्याचक्षते ॥

અર્થ–હે સોમ્ય! આ પ્રજાનું મૂળ સદ્રૂપ બ્રહ્મ છે, રહેવાનું સ્થાનક સદ્રૂપ બ્રહ્મ છે, અને છેવટ બ્રહ્મમાંજ રહેનાર છે તે સત્ય છે. જે આ કાંઇ છે તે સત્ય છે એમ પ્રાચીન ઋષિઓ કહે છે. વળી કહેલ છે કેઃ–

कथमसतः सज्जायेत ।

અર્થ–અસત્યથી સત્ય કેમ થાય? એટલે માયાથી જગત્ ઉત્પન્ન થયું છે એમ કહિએં તો માયા ખોટી છે એમ સ્વીકારનારને કહે છે કે અસદ્રૂપમાયાથી સદ્રૂપ જગત્ કેમ થાય? તેમ જગત્ પણ અસદ્રૂપ થયું છે એમ કહેશો તો અસદ્રૂપ જગત્ કહેવાથી જગતમાં રહેલ વેદ, ગુરુ અને તેનાં વાકયો છે તે પણ અસત્ છે એમ કહેવું જોશે ત્યારે તેવા અસત્ય ઉપદેશથી સદ્રૂપ બ્રહ્મ કેમ ફળીભૂત થાય? એવી રીતે અનેક તર્કોથી જગતને અસત્ય કહેવામાં બાધ આવે છે. તેમ છાંદોગ્ય-ઉપનિષદના છઠ્ઠા પ્રપાઠકના પ્રથમ ખંડમાં કહેલ છે કે અરુણિના પુત્ર ઉદ્દાલકનો પુત્ર શ્વેતકેતુ હતો તેને તેના પિતાએં કહ્યું કે હે શ્વેતકેતુ! બ્રહ્મચર્ય ધારણ કરી વિદ્યાભ્યાસ કરય. આપણાં કુલમાં ઉત્પન્ન થયેલો કોય *બ્રહ્મબંધુજેવો વિદ્યા નહિંજાણનાર હોતો નથી. એમ પિતાએ કહ્યું ત્યારે શ્વેતકેતુ બારવર્ષનો હતો તે ગુરુના સમીપમાં જઇ ચોવીશવર્ષનો થયો ત્યાંસુધીમાં ચારે વેદ અર્થસહિત ભણ્યો ત્યારે પોતાની બરોબર ભણેલો કોય નથી એમ તે માનવા લાગ્યો એટલે નમ્રસ્વભાવવગરનો ઉદ્ધત થઇને આવ્યો તેને જોઈને તેના પિતાએ તેના અભિમાનની નિવૃત્તિ કરવામાટે પૂછ્યું કેઃ–

यन्नु सोम्येदं महामना अनूचमानी स्तब्धोऽस्युत तमादेशम-
प्राक्ष्यः? येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति ।

અર્થ–કોમળ આમંત્રણ કરિને કહે છે કે હે સોમ્ય! જે આ મ્હારા જેવો બીજો કોય નથી એમ માનીને હું ઘણું ભણી ગયો છું મ્હારા જેટલું બીજો ભણેલો નથી એમ માનનાર તું ઉદ્ધત થયો છે તે શું એવી રીતનો ઉપદેશ તેં તારા ગુરુને પૂછ્યો છે? કે જેનાથી નહિં સાંભળેલું હોય તે સાંભળેલું થાય છે, ન માનેલું હોય તે (તર્કમાં આવીને) માનેલું થાય છે અને ન જાણેલું હોય તે (નિશ્ચય કરીને) જા-

---

* બ્રાહ્મણ પોતાના બંધુ છે એમ બતાવે પણ પોતામાં બ્રાહ્મણનું આચરણ હોય નહિ તે બ્રહ્મબંધુ કહેવાય.

ણેલું થાય છે. એમ પિતાએ પૂછયું ત્યારે શ્વેતકેતુએ કહ્યું કે કેવી રીતનો તે ઉપદેશ થાય છે? અર્થાત્ તમે તેવો ઉપદેશ કરો એમ શ્વેતકેતુના કહેવાથી ઉદ્દાલકે કહેલું છે કેઃ—

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।**

અર્થ—હે સોમ્ય! મૃત્તિકાનો એક પિંડો જાણવાથી મૃત્તિકાના તમામ પદાર્થ જેમ જણાય, તેમ એક બ્રહ્મ જાણવાથી બ્રહ્મમાંથી થયેલ તમામ કાર્યરૂપ જગત્ જણાય: મૃત્તિકામાંથી થયેલ ઘટાદિકમાં જે પેટને ભાગે પહોળાઈ અને કાંઠાના ભાગમાં સાંકડાઈવાળો વિકાર જણાય છે તે વાણીની ક્રિયારૂપ છે, કાંઈ મૃત્તિકાથી ઘડો જૂદો છે એમ બતાવનાર નથી. (જેમ પુરુષ સૂતો હોય, ઉભો થયો હોય કે બેઠો હોય તેમાં તે પુરુષ જૂદા જૂદા નથી પણ એકજ પુરુષ જૂદી જૂદી રીતેં અવયવો રાખીને રહેલ છે તેવી રીતેં એકજ મૃત્તિકા જૂદા જૂદા પ્રકારે રહેલ છે. મૃત્તિકાથી ઘટ કાંઇ જૂદો નથી.) માટે ઘટ અને શરાવાદિક એવાં જૂદાં જૂદાં રૂપથી મૃત્તિકાજ રહેલ છે. તેવીજ રીતેં ઘટ તથા શરાવાદિક નામ છે તે પણ મૃત્તિકાનાંજ છે. જળ લાવવાના કામમાટે ઘડારૂપથી અને ભોજનાદિક કામમાટે શરાવાદિકરૂપથી મૃત્તિકાજ વ્યવહારમાં આવે છે. કારણરૂપ મૃત્તિકાથી ઘડોવિગેરે કાર્ય જૂદું નથી એમ બતાવવા સારૂ मृत्तिकेत्येव सत्यम् (એપ્રકારની મૃત્તિકા છે તેથી તે સત્ય છે.) એમ કહ્યું છે; તેથી બ્રહ્મમાંથી જગત્ થયું છે તે જૂદે જૂદે પ્રકારે બ્રહ્મજ છે. એમ બતાવવાસારૂ આ મૃત્તિકાનું દૃષ્ટાંત આપેલ છે. નામ તથા રૂપ મિથ્યા છે એમ કહેવાનો શ્રુતિનો અભિપ્રાય હોત તો मृत्तिकैव सत्यम् ( મૃત્તિકાજ સાચી છે ) એમ કહેત પણ मृत्तिकेत्येव सत्यम् (એપ્રકારની મૃત્તિકાજ છે તેથી તે સત્ય છે) એમ કહેત નહિં, અને અહિં તો પ્રકારના અર્થને બતાવનાર इति શબ્દ કહેલો છે તે એવા પ્રકારની મૃત્તિકાજ છે એમ બતાવનાર છે. તેમ મૃત્તિકાજ સત્ય છે (અને મૃન્મય કાર્ય ખોટું છે) એમ કહેવાનો શ્રુતિનો અભિપ્રાય હોત તો मृत्तिका શબ્દ સ્ત્રીલિંગેં હોવાથી सत्या એમ સ્ત્રીલિંગે સત્યશબ્દનો પ્રયોગ કહેત પણ सत्यम् એમ નપુંસકલિંગનો પ્રયોગ વાપરેલો છે તેથી सर्वं मृन्मयं विज्ञातं स्यात् ( બધું મૃત્તિકામય જાણેલું થાય ) એમ સામાન્ય રીતેં મૃત્તિકાના વિકારને કહેનાર मृन्मय શબ્દ પ્રથમ નપુંસકલિંગેં લખેલ છે તે સત્ય છે એમ કહેવામાટે છેવટ सत्य શબ્દ નપુંસકલિંગે લખ્યો છે; તેમ એક જાણવાથી બધું જણાય એવો ઉપદેશ કરવાના પ્રસંગમાં મૃત્તિકાનું દૃષ્ટાંત આપેલ છે તે જેમ મૃત્તિકા જાણવાથી ઘટશરાવાદિક બધા જણાય છે. કેમકે તે મૃત્તિકારૂપ છે તેવી રીતેં આ જગત્ બ્રહ્મરૂપ હોવાથી બ્રહ્મ જાણવાથી બધું જણાય. એવો અભિપ્રાય કહેલ છે તે પણ જગત્ બ્રહ્મરૂપ છે એમ સિદ્ધ કરે છે; માટે આશ્રુતિથી એટલુંજ સમજવાનું છેકે જગત્ બ્રહ્મથી જૂદું નથી તેથીજ વ્યાસસૂત્રમાં કહેલ છે કેઃ—

सदनन्यत्वमारंभणशब्दादिभ्यः ।

અર્થ—બ્રહ્મથી અનન્યપણું જગતને છે; કેમકે वाचारंभणम् ઈત્યાદિક શ્રુતિઓમાં બ્રહ્મથી જગત્ જૂદું નથી અર્થાત્ બ્રહ્મરૂપજ છે એમ કહેલ છે. આસૂત્રમાં આદિ શબ્દ છે તે स आत्मानं स्वयमकुरुत ( તેઆત્માયેં પોતેં પોતાના આત્માને જગદ્રૂપ કરેલ છે.) स हैतावानास (તે આત્મા નિશ્ચય આટલા (જગદ્રૂપ) થયેલ છે.) ઈત્યાદિક શ્રુતિયોનો બોધ કરે છે. તેમ શ્રીભાગવતએકાદશસ્કંધમાં પણ કહેલ છે કેઃ—

आत्मैव तदिदं विश्वं सृज्यते सृजतीश्वरः ।
त्रायते त्राति विश्वात्मा ह्रीयते हरतीश्वरः ॥

અર્થ—આ જગત્ આત્માજ છે તે પોતેં સૃજાય છે અને ઈશ્વર પોતેં સૃજે છે, વિશ્વરૂપ પોતેં રક્ષાકરાય છે અને પોતેં રક્ષા કરે છે તેમજ પોતેં હરાય છે અને પોતેં ઇશ્વરજ હરે છે; એટલેં સૃજાય છે તે અને સૃજે છે તે, જેની રક્ષા થાય છે તે અને જે રક્ષા કરે છે તે તેમજ જેનો સંહાર થાય છે તે અને જે સંહાર કરે છે તે ઇશ્વરજ છે, ઇત્યાદિક અનેક પ્રમાણોથી આ જગત્ બ્રહ્મરૂપ અને સત્ય છે એમ સિદ્ધ થાય છે; માટે જગત્ અસત્ય છે, એવું જ્ઞાન તો આસુરજીવોને થાય છે, તેવિષે શ્રીમદ્‌ભગવદ્‌ગીતાના સોળમા અધ્યાયમાં આસુરી સંપદનું નિરૂપણ છે ત્યાં કહેલ છે કેઃ—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।

અર્થ—તે આસુર જીવો જગત્ અસત્ય છે એમ કેટલાએક કહે છે, સ્થિતિવગરનું છે એમ કેટલાક કહે છે અને ઇશ્વરવગરનું છે એમ કેટલાક કહે છે, એમ કહ્યું છે તેથી જગતને અસત્યકહેનારને ભગવાને આસુર કહેલા છે તે સ્પષ્ટ છે. જગતને નિત્ય અને સત્ય કહેશો તો બ્રહ્મ તથા જગત્ બન્ને નિત્ય થયાં ત્યારે દ્વૈત થયું એવી શંકા થાય ત્યાં કહે છે કે બ્રહ્મરૂપ કાર્યનું કારણ પણ બ્રહ્મજ હોય માટે મૃત્તિકા અને ઘટની માફક કાર્ય અને કારણને એકતા હોવાથી દ્વૈતપણું થતું નથી. सर्वं खल्विदं ब्रह्म (આ સર્વ નિશ્ચય બ્રહ્મ છે) ઇત્યાદિક શ્રુતિયોથી જગત્ બ્રહ્મરૂપ છે એમ સિદ્ધ છે ત્યારેં બ્રહ્મરૂપ જગતનું કારણ પણ બ્રહ્મજ હોય. માયા વિગેરે કારણ હોય નહિં. ( ५—६ )

બ્રહ્મ, જગતનું કારણ છે તેમાં પ્રમાણ કહે છે.

मूलम् । "जन्माद्यस्ये"त्यादिसूत्रैर्व्यासपादैर्निरूपितम् ।
"यतोवे"त्यादिवाक्येषु वेदे स्पष्टं प्रतीयते ॥ ७ ॥

શબ્દાર્થ—जन्माद्यस्य यतः शास्त्रयोनित्वात् ઇત્યાદિક સૂત્રોવડે વ્યાસચરણેં નિરૂપણ કરેલું છે અને यतो वाइमानि भूतानि जायंते ઇત્યાદિક વાક્યોમાં વેદમાં સ્પષ્ટ દેખાય છે.

ટીકા—વ્યાસસૂત્રમાં जन्माद्यस्य यतः शास्त्रयोनित्वात् (મનવડે પણ જેનું રચન, જાણી શકાતું નથી એવા, આ (પુરોવર્ત્તિ) પ્રપંચના જન્માદિક જે બ્રહ્મથી થાય છે; કેમકે શાસ્ત્રમાં જગદ્રૂપકાર્યનું કારણપણું બ્રહ્મને કહેલ છે.) એસૂત્રથી આરંભ કરીને ચારઅધિકરણવડે બ્રહ્મ જગતનું કારણ છે એમ સિદ્ધ કરેલ છે; તેમાં

जन्माद्यस्य यतः शास्त्रयोनित्वात् એસૂત્રમાં બ્રહ્મ જગતનું કારણ છે એમ શાસ્ત્રમાં કહેલ છે, એવી રીતેં કહેલ છે. તે તૈત્તરીયઉપનિષદ્માં કહેલ છે કે:—

यतो वाइमानि भूतानि जायन्ते येन जातानि जीवन्ति
यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्मेति विजिज्ञासस्व ॥

અર્થ—વરુણ પોતાના પુત્ર ભૃગુને કહે છે કે જેનાથી આ ભૂત (પ્રાણિમાત્ર) ઉત્પન્ન થાય છે, ઉત્પન્ન થયેલાં જેનાથી જીવે છે અને જેનામાં અંતે પ્રવેશ કરે છે તે બ્રહ્મ છે એમ તું જાણ. એવી રીતે વેદમાં જગતને કરનાર બ્રહ્મ છે એમ લખેલું છે; ત્યાં અણુભાષ્યમાં લખ્યું છે કે જગતને કરનાર બ્રહ્મ છે કે નહિં? એવો સંદેહ કરીને ब्रह्मविदाप्नोति परम् (બ્રહ્મને જાણનાર તેનાથી પર એવા પુરુષોત્તમને પામે છે) એશ્રુતિવડે બ્રહ્મને જાણનાર હોય તેને પરની પ્રાપ્તિ થાય છે એમ પ્રતિજ્ઞા કરીને सत्यं ज्ञानमनन्तं ब्रह्म એશ્રુતિવડે બ્રહ્મનાં સ્વરૂપનું લક્ષણ કહ્યું છે કે બ્રહ્મ સત્ય, જ્ઞાન અને અંતવગરનું છે. એમ કહીને બ્રહ્મને જાણનાર પરને પામે છે તે પર સર્વની ભીતર રહેલ છે એમ બતાવવામાટે આકાશથી વાયુ થાય છે અને વાયુથી અગ્નિ થાય છે ઇત્યાદિક ક્રમથી સૃષ્ટિ કહેલી છે; તેમાં માયા જગતને કરે છે તેનો આરોપ બ્રહ્મમાં થાય છે. (જેમ રાજ્યનું કામકરનાર માણસ જે કરે તેનો આરોપ રાજા ઉપર થાય છે એટલે રાજાએ કરેલું કહેવાય છે) એવી રીતેં વરુણે ભૃગુને કહેલ છે કે જગતને કરનાર બ્રહ્મ છે ત્યાં પણ ગૌણજ કર્ત્તાપણાનો અનુવાદ કરાય છે એમ પૂર્વપક્ષ કરીને સમાધાન કરેલ છે કે પ્રત્યક્ષ રહેલ આ સર્વ જગતના જન્મ, સ્થિતિ અને પ્રલય જેનાથી થાય છે તે જગતને કરનાર છે; કેમકે શાસ્ત્રમાં તેનું કારણપણું કહેલ છે. વેદના પૂર્વ તથા ઉત્તરકાંડનાં સૃષ્ટિસંબંધિ વાક્યો, તેમ જ સ્મૃતિ તથા પુરાણાદિકમાં કહેલ સૃષ્ટિસંબંધ વાક્યોનો સંગ્રહ કરવામાટે શાસ્ત્રમાં કહેલ કારણપણું બ્રહ્મને છે એમ સામાન્યરીતેં કહેલ છે. તેમ सत्यं ज्ञानमनंतं ब्रह्म (સત્ય, જ્ઞાનસ્વરૂપ અને અંતવગરનું બ્રહ્મ છે) એમ બ્રહ્મનાં સ્વરૂપનાં લક્ષણને કહેનાર શ્રુતિ છે તેમાં જગતના કર્ત્તાપણાંનો નિષેધ કરેલો નથી; એટલેં જગતને કરનાર બ્રહ્મ નથી એમ કહેલું નથી. પણ ઉલટું શ્રુતિમાંજ જગતનું કારણ બ્રહ્મ છે એમ કહેલ છે. બીજા ઉપનિષદ્માં अस्थूलं अनणु (સ્થૂલ નથી તેમ અણુ નથી) એમ ધર્મનો નિષેધ કરેલો છે તેમાં પણ પરસ્પરવિરુદ્ધધર્મોના આશ્રયપણું બ્રહ્મને છે તેથી પ્રાકૃતધર્મોના નિષેધપર તે વાક્ય છે; માટે બ્રહ્મમાં કર્ત્તાપણાંનો આરોપ છે એમ માનવું તે યોગ્ય નથી; કેમકે માયા જગતનું કારણ નથી એમ તો વ્યાસસૂત્રમાં જ કહેલ છે અને જીવને સ્વતંત્રપણું નહિં હોવાથી જીવ જગતનો કર્ત્તા છે એમ કહેવું તો સંભવતું જ નથી. તેમ બ્રહ્મમાં કર્ત્તાપણાંનો આરોપ કોણે કેવી રીતેં કર્યો? ઇત્યાદિક વિચારનું વિવેચન આગળ આવશે તેપ્રમાણે વિચાર કરતાં બ્રહ્મમાં આરોપ સંભવતો જ નથી; માટે બ્રહ્મજ જગતનું કારણ છે. અહિં जन्माद्यस्य यतः જૂદું સૂત્ર છે અને शास्त्रयोनित्वात् એ સૂત્ર ભિન્ન છે એમ માનવું

યોગ્ય નથી; કેમકે આગળનાં સૂત્રોમાં *સાધ્ય તથા હેતુ બન્ને સાથે લખેલ જોવામાં આવે છે તેવી રીતેં અહિં પણ સાધ્ય તથા હેતુ સાથેજ હોવા જોઇએ; કેમકે શ્રીમદ્ભગવદ્ગીતાના ૧૩ મા અધ્યાયમાં શ્રીકૃષ્ણ ભગવાને અર્જુનપ્રત્યે કહેલ છે કેઃ—

ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ।

અર્થ—નિશ્ચય કરેલ હેતુયુક્ત વ્યાસસૂત્રનાં પદોવડે ગીત છે. એમ ભગવાનનું વાક્ય હોવાથી વ્યાસસૂત્રોમાં હેતુ અવશ્ય હોવો જોઇએ તે બન્ને સૂત્રો ભિન્ન ભિન્ન-માનવાથી સાધ્ય તથા હેતુ બન્ને સાથે આવતાં નથી તેથી ભગવાનના વાક્યથી વિરોધ આવે છે. जन्माद्यस्य यतः એસૂત્રનું અધિકરણ જૂદું અને शास्त्रयोनित्वात् એસૂત્રનું અધિકરણ જૂદું છે એમ કેટલાએક સ્વીકારે છે તેમાં जन्माद्यस्य यतः એ સૂત્રમાં (એટલે તેટલુંજ સૂત્ર જૂદું માની અધિકરણ ભિન્ન માનવાથી, તેટલા સૂત્રમાં) બ્રહ્મથી જગતનું જન્માદિક સિદ્ધ કરવું તે સાધ્ય છે પણ તે સિદ્ધકરવાનું કારણ शास्त्रयोनित्वात् એમ કહિયેં ત્યારે શાસ્ત્રોક્તકારણપણું છે એમ કહેવાય. તે તો તેટલું જૂદું સૂત્ર છે એમ માનવાથી રહેતું નથી માટે પ્રથમનો ભાગ જૂદો માનવાથી હેતુવગર સાધ્ય સિદ્ધ થતું નથી અને બીજો ભાગ જૂદો માનવાથી સાધ્યવગરનો હેતુનકામો થઈપડે છે તેથી વાક્યાર્થ સિદ્ધ થતો નથી. એવી રીતે जन्माद्यस्य यतः शास्त्रयोनित्वात् (જે બ્રહ્મથી આ જગતનાં જન્માદિક થાય છે; કેમકે શાસ્ત્રમાં કારણપણું કહેલ છે.) એ એક સૂત્રના બે વિભાગ કરવામાં અનેક દોષો આવે છે તેનો વિસ્તાર ભાષ્યપ્રકાશમાં શ્રીપુરુષોત્તમજીયેં કરેલ છે. બીજાં અધિકરણમાં तत्तु समन्वयात् (બ્રહ્મ જગતનું કારણ છે; કેમકે સારી રીતેં જગતમાં અનુવૃતપણું (ઘટમાં મૃત્તિકાની પેંઠે) બ્રહ્મનું છે. એસૂત્રમાં બ્રહ્મ જગતનું સમવાયિકારણ (ઘટનું મૃત્તિકા ઉપાદાન કારણ છે તેમ) છે કે નહિં એવો સંશય થાય ત્યાં બ્રહ્મ સમવાયિ કારણ છે એમ માનીયેં તો બ્રહ્મને વિકારિપણું થાય માટે બ્રહ્મ સમવાયિ કારણ નથી એમ પૂર્વપક્ષ થાય તેની નિવૃત્તિ-માટે આ સૂત્ર છે તેનો અભિપ્રાય એવો છે કે બ્રહ્મ જગતનું સમવાયિ કારણ છે; કેમકે આરોપ કર્યાવગર અને આગંતુકરૂપવગર જગતમાં બ્રહ્મ સારી રીતેં અનુસ્યૂત રહેલ છે. ઘટમાં જેમ મૃત્તિકા અનુસ્યૂત રહેલ છે તેમ જગતમાં अस्ति, (છે) भाति (પ્રકાશે છે) અને प्रिय (આનંદરૂપ છે) એવી રીતેં બ્રહ્મના સત્, ચિત્ તથા આનંદરૂપ અંશો જગતમાં સારી રીતેં અનુસ્યૂત રહેલા છે. તેમજ નામ તથા રૂપ

---

* पर्वतो वह्निमान् (પર્વત અગ્નિવાળો છે.) એમ કહેવું તેમાં અગ્નિ સાધ્ય કહેવાય છે અને धूमवत्वात् (ધૂમાડાવાળો છે માટે) એમ કહેવું તેમાં ધૂમાડો એ હેતુ છે એટલેં ધૂમાડારૂપ હેતુથી અગ્નિ પર્વતમાં છે એમ સિદ્ધ કરી શકાય છે તેથી અગ્નિ સાધ્ય કહેવાય છે. તેવી રીતેં जन्माद्यस्य यतः એસૂત્રમાં બ્રહ્મથી જગતના જન્માદિક થાય છે એમ કહેવામાં બ્રહ્મથી જગતનાં જન્માદિક થવાનું સિદ્ધ કરવાનું હોવાથી બ્રહ્મથી જગતનું જન્માદિક થવું તે સાધ્ય છે. બીજું ધૂમરૂપ હેતુથી પર્વતમાં અગ્નિ સિદ્ધ થાય છે માટે ધૂમ હેતુ કહેવાય છે તેવી રીતેં અહિં शास्त्रयोनित्वात् એસૂત્રમાં બ્રહ્મ જગતના જન્માદિકનું કારણ છે એમ શાસ્ત્રમાં કહ્યું છે તેમાં જગતમાં જન્માદિકનું કારણ બ્રહ્મ છે એમ સિદ્ધ કરવામાં શાસ્ત્રમાં કહેલ કારણપણું છે એમ કહેવું એ હેતુ છે

